तद्ग्रहणं युक्तं तस्यैव प्रथमं सम्प्रत्ययादिति। यत युक्तं ज्ञात्वा कार्य्यम् ॥ ७ ॥

**अन्नमन्ने ॥ ८ ॥**

हुतशेषमन्नं भोजनार्थेषु पात्रेषु निहितेष्वन्नेषु ददाति अग्निहोमे पाणिहोमे च समानमिदम् ॥ ८ ॥

**सृष्टं दत्तमभुक्तमिति ॥ ९ ॥**

सृष्टं प्रभूतन्दत्तं स्वभुक्तं स्वविकरणशीलम्। इतिशब्दो हेत्वर्थः। तस्मात्प्रभूतमन्नं देयमिति भोजनस्य पर्य्याप्तमात्रं न देयम्। ततोऽप्यधिकं देयं यथोच्छिष्यतेत्यर्थः ॥ ९ ॥

**तृप्तान् ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमीमदन्तेति च ॥ १० ॥**

मधुवाता इति तिस्रो मधुमत्य इति प्रसिद्धाः। अन्नादिनिवृत्तेच्छां ज्ञात्वा ततो मधुमतीति तिस्रोऽक्षन्नित्येकां श्रावयेत्। तृप्तेषु श्रावयेदित्येव वक्तव्ये ज्ञात्वेति वचनं ज्ञात्वैताः श्रावयेत् पूर्वन्तु भोजनकाले अन्याः श्रावयेदित्येवमर्थम्। मनुनाप्युक्तम्।

स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि।
आख्यातानीतिहासांश्च पुराणानि खिलानि च इति ॥ १० ॥

**सम्पन्नमिति पृष्ट्वा यद्यदन्नमुपयुक्तं तत्तत् स्थालीपाकेन सह पिण्डार्थमुद्धृत्य शेषं निवेदयेत् ॥ ११ ॥**

अथ सम्पन्नमित्यनेन वाक्येन ब्राह्मणान् पृच्छति ते च सम्पन्नमिति प्रत्यूचुः। ततो यद्यदन्नमुपयुक्तं तस्मात् तस्माद-

मादुद्धरन्ति पिण्डार्थम् । ततत् स्थालीपाकेन सहैकीकरोति अन्नप्रकीरणार्थस्वार्थादस्मिन्नेव काले सर्वस्मान्नुक्तशेषादुद्धरति । ततो भुक्तोद्धृतशेषं निवेदयेत् ब्राह्मणेभ्यः । इदं शिष्टं किमनेन कर्त्तव्यमिति । स्थालीपाकेन सहेति नायापूर्वः स्थालीपाकश्चोद्यते । सर्वश्राद्धेषु प्रसङ्गात् । अनिष्टश्चैतत् । तेनानुवाद एवायम् । तेन यत्र स्थालीपाको विहितस्तत्र तेन भुक्तशेषेण च पिण्डनिपरणं भवति । यत्र तु स्थालीपाकविधिर्नास्ति तत्र भुक्तशेषेणैव केवलेन निपरणं भवति । आचार्य्येणाष्टौ श्राद्धान्युक्तानि ।

> अन्वष्टक्यञ्च पूर्वेद्युर्मासि मासि च पार्वणम् ।
> काम्यमभ्युदयेऽष्टम्यां एकोद्दिष्टमथाष्टमम् ॥

तत्र पूर्वेषु चतुर्षु स्थालीपाकादुद्धृत्याग्नौ करणम् । अग्निसमीपे स्थालीपाकेन भुक्तशेषेण च पिण्डनिपरणम् । पिण्डपितृयज्ञकल्पस्य तेषु विद्यमानत्वात् । तच्च साधितमेव प्राक् । उत्तरेषु चतुर्षु भोजनार्थादन्नादुद्धृत्य घृताक्तं कृत्वा पाणिहोमः । ब्राह्मणसमीपे भुक्तशेषमात्रेण पिण्डनिपरणम् । तेषु स्थालीपाकविध्यभावात् पिण्डपितृयज्ञकल्पप्राप्त्यभावाच्च । तत्रार्थाम्लेखा च तदभ्युक्षणं च सकृदाच्छिन्नावस्तरणं च लेखा विरुदकेनेत्यादिपत्नीप्राशनान्तं भवति । अग्निं प्रत्येयादिति तु न भवति अन्यच्चातिप्रणयनादि सर्वं न भवति ॥ ११ ॥

**अभिमतेऽनुमते वा भुक्तवत्स्वनाचान्तेषु पिण्डान्निदध्यात् ॥ १२ ॥**

शेषं निवेदितं ब्राह्मणैर्यद्यभिमतं स्वीकर्त्तुं अभिप्रेतं तदा तेभ्यो दद्यात् । अथ यद्यनुमतमनुज्ञातं दृष्टैः सहोपभुज्यता-

मिति तत स्वीकृत्य ज्ञातिभिर्बान्धवैश्च सहोपभुञ्जीत। मनु-रपि।

ज्ञातिभ्यः सत्कृतन्दत्त्वा बान्धवानपि पूजयेत्। इति।

ततः अनाचान्तेषु पिण्डान्निदध्यात् पूर्वोक्तविधिना। अनाचान्तेषु पिण्डान्निदध्यात् पूर्वोक्तविधिना। अनाचान्तेष्वित्येव सिद्धे भुक्तवत्स्वितिवचनं भुक्तवत्स्वेव निदध्यात्। न पूर्वमित्येवमर्थम्। मनुना भोजनात् पूर्वं निपरणं विहितं तन्न कार्य्यमिति। अतो ज्ञायते। अन्यस्य मनुप्रोक्तस्याविरुद्धस्याङ्गस्येच्छातः करणमिति ॥ १२ ॥

## आचान्तेष्वेके ॥ १३ ॥

आचान्तेषु निपरणमेके इच्छन्ति ॥ १३ ॥

## प्रकीर्य्यान्नमुपवीयो स्वधोच्यतामिति विसृजेत् ॥ १४ ॥

आचमनोत्तरकालमुच्छिष्टानां समीपेषु अन्नं प्रकिरेत्। अनाचान्तेषु पिण्डदानपक्षेऽपि पिण्डन्दत्त्वा तत उच्छिष्टानां समीपे अन्नं प्रकिरेत्। मनुरपि।

सार्ववर्णिकमन्नाद्यमानीयाप्लाव्य वारिणा।

समुत्सृजेद्भुक्तवतामग्रतो विकिरन् भुवि॥ इति।

अधुना प्रथमं पात्रं विहरणुयात्। तत उपवीय यज्ञोपवीती भूत्वेत्यर्थः। मनुरपि।

उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैः।

सव्ये प्राचीनमावीती निवीती कण्ठसज्जनः॥ इति।

ततो दक्षिणां दत्त्वा, ॐ स्वधोच्यतामिति ब्राह्मणान्

विसृजेत्। अतिसृजेत्। अनुजानीयादुत्थापयेदित्यर्थः। ते च ॐ स्वधेति प्रत्यूचुः॥ १४॥

## अस्तु स्वधेति वा॥ १५॥

अस्तु स्वधेति वा विसृजेत्। तथा सति ते च अस्तु स्वधेति प्रत्यूचुः।

विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः।
दक्षिणान्दिशमाकाङ्क्षन्याचेतेमान्वरान् पितॄन्॥
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च।
श्रद्धा च नो मा व्यगमद्बहुधेयञ्च नोऽस्त्विति॥
उच्छेषणन्तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः।
ततो गृहबलिं दद्यादिति धर्मो व्यवस्थितः॥ इति मनुः।

अष्टौ श्राद्धानीत्युक्तम्। तत्रान्वष्टक्यञ्च पूर्वेद्युश्च मासि मासि चेति श्राद्धत्रयं द्वितीयेऽध्याये व्यक्तीकृतम्। पार्वण-स्यानाहितस्यग्नेर्व्यक्तीकृतमेव। आहिताग्निस्तु पिण्डपितृयज्ञं समाप्य ततः पार्वणं करोति। पितृयज्ञन्तु निर्वर्त्येति मनुः। तत्र पाणिहोमः। ब्राह्मणसमीपे भुक्तशेषमात्रेण पिण्डदा-नञ्च। काम्ये च पाणिहोमः। भुक्तशेषमात्रेण पिण्डदान-मात्रमेव। मासिश्राद्धस्य पार्वणस्य च एककार्य्यत्वादन्यतरे-णैवालमित्युक्तम्। तत्र मासिश्राद्धं कृतवांश्चेत्पर्वणि केवलं पिण्डपितृयज्ञः कार्य्य एव। काम्यश्राद्धं कृतञ्चेत्तेनैवालं न पुनर्मासिश्राद्धपार्वणश्राद्धे कार्य्ये। काम्यश्रुतिस्तु तिथिवि-शेषमपेक्ष्य चरितार्था न पुनरावर्त्तयितुं शक्नोति। अग्निहो-त्रद्रव्यवत्। आभ्युदयिके तु युग्मा ब्राह्मणा ऋजूला दर्भाः। प्राङ्मुखोपवीती स्यात् प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धा-दिदानं द्विर्द्विः ऋजुदर्भानासने दद्यात्। यवोऽसि सोमदेवत्यो

गोत्सवे देवविसर्जितः। प्रश्नवद्भिः प्रत्तः पुष्पा नान्दीमुखान् पितृनिमांल्लोकान् प्रीणयाहि नः स्वाहेति यवावपनम्। नान्दीमुखाः पितरः प्रीयन्तामित्यर्घ्यं निवेदनं यथालिङ्गं नान्दीमुखाः पितरः इदं वः अर्घ्यमित्यर्घ्यप्रदानं मन्त्रो यथालिङ्गम्। अग्नये कव्यवाहनाय स्वाहा। सोमाय पितृमते स्वाहेति होममन्त्रौ। मधुवाता इति तृचस्य स्थाने उपास्मै गायतेति पञ्च मधुमतीः श्रावयेत्। अक्षन्नमीमदन्तेति षष्ठीम्। आचान्तेषु भुक्ताग्रयान् गोमयेनोपलिप्य तेषु प्राचीनाग्रान् दर्भानास्तीर्य तेषु पृषदाज्यमिश्रेषु भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात्तेनैव क्रमेण मन्त्रावृत्तिरुक्ता। अन्ये तु नान्दीमुखेभ्यः पितृभ्यः स्वाहेति एवं यथालिङ्गं पिण्डान्निपृणन्ति। सर्पिषि दध्यानयति एतदेवं पृषदाज्यं अनुमन्त्रणादि पूर्ववत्। अन्ये त्वनुमन्त्रणादि नेच्छन्ति। ॐ स्वधोच्यतामित्यस्य स्थाने उपसम्पन्नमिति शेषं पूर्ववत्। अष्टमीश्राद्धं काम्यवत्। एकोद्दिष्टे त्वेको विप्र एकमर्घ्यपात्रं न दैवं न धूपो न दीपो न स्वधाशब्दो न पितृशब्दो न नमःशब्दः तिलोऽसीति मन्त्रस्योहः तूष्णीं वा तिलावपनं अर्घ्यं निवेदनं तूष्णीं अर्घ्यं दत्त्वा तत्पात्रं न्युब्जं करोति। भोजनार्थादन्नादुद्धृत्य घृताक्तं कृत्वा अमुष्मै स्वाहेति पाणिहोमः। अमुष्मैशब्दस्य स्थाने प्रेतनाम वाच्यम्। नाभिश्रावणं भुक्तशेषमात्रेणैकं पिण्डं निपृणीयात्। तस्य गोत्रं नाम गृहीत्वा निनयनमन्त्रस्योहः। अनुमन्त्रणादि सर्वं समन्त्रकं भवति पत्नीप्राशनन्तु नास्ति। अभिरम्यतामिति विसर्जनं एव नवश्राद्धवर्जितेषु एकोद्दिष्टेषु। नवश्राद्धेषु तु एकोद्दिष्टेषु सर्वममन्त्रकं भवति। नवश्राद्धममन्त्रकमिति वचनात्। दशाहेषु यानि श्राद्धानि तानि नवश्राद्धानि। नवश्राद्धं दशाहानीति वचनात्। यत्र यत्राग्निभिः पाणिहोम

उक्त: तत्र सर्वत्र भाष्यकार: पिण्डदानं नेच्छति। स्थालीपाकेन सह भुक्तशेषेण पिण्डदानस्योक्तत्वात्‌ तत्र च स्थालीपाकाभावा-दिति। ये तु पिण्डदानमिच्छन्ति त एवमाहु:। स्थालीपाकेन सह पिण्डदानं कार्य्यं न पृथक्‌ स्थालीपाकेन भुक्तशेषेण चेत्य-यमर्थ:। न तु यत्र स्थालीपाकस्तत्रैव पिण्डदानं कार्य्य-मिति। तेन तेष्वपि केवलेन भुक्तशेषेण पिण्डदानं कार्य्यमिति ॥ १५ ॥

इति चतुर्थे अष्टमी कण्डिका ॥

---

अथ नवमी कण्डिका।

**अथ शूलगव: ॥ १ ॥**

उक्तोऽर्थ:। शूलगव इति कर्मनाम स वक्ष्यते। शूलोऽस्या-स्तीति शूल:। अर्श आदिभ्योऽच्‌। शूलीत्यर्थ:। शूलिने रुद्राय गोपशुना याग:। स शूलगव: ॥ १ ॥

**शरदि वसन्ते वार्द्रया ॥ २ ॥**

शरदि वसन्ते वा क्रतौ आर्द्रानक्षत्रेण स कार्य्य: ॥ २ ॥

**श्रेष्ठं स्वस्य यूथस्य ॥ ३ ॥**

स्वस्य यूथस्य श्रेष्ठं कायेन अभिषिच्येत्यनेन सम्बन्ध: ॥ ३ ॥

**अकुष्ठिपृषत्‌ ॥ ४ ॥**

स च पशु: अकुष्ठिपृषत्कार्य्य:। कुष्ठी च पृषच्च न ग्राह्य इत्यर्थ:। पृषद्वर्णो लोहित: शुक्लबिन्दुभि: संयुक्त: ॥ ४ ॥

**कल्माषमित्येके ॥ ५ ॥**

कल्माषं गृह्णीयादित्येके प्राहुः। कल्माषो नाम कृष्णबिन्दुचितः॥ ५॥

कामं कृष्णमालोहवांश्चेत्॥ ६॥

कामं कृष्णं गृह्णीयादालोहवांश्चेद्भवति जम्बूसदृश इत्यर्थः॥ ६॥

व्रीहियवमतीभिरद्भिरभिषिच्य॥ ७॥

एवं गुणयुक्तं पशुं अस्मात्कर्मणः पूर्वमेव व्रीहियवमतीभिरद्भिरभिषिञ्चति स्नपयति स्वयमेव॥ ७॥

शिरस्त आभसत्तः॥ ८॥

शिरस्त उपरि प्रारभ्य आभसत्तः पायुप्रदेशात्॥ ८॥

रुद्राय महादेवाय जुष्टो वर्धस्वेति॥ ९॥

रुद्रायेति मन्त्रेण तत उत्सृष्टो वर्धते पशुर्यावदुत्पन्नदन्तो भवति सेचनसमर्थो वा भवति॥ ९॥

तं वर्धयेत् सम्पन्नदन्तमृषभं वा॥ १०॥

तं पशुमेवमवश्यं वर्धयेत् ततोऽन्यतरस्यामवस्थायां कर्म कुर्याद्वक्ष्यमाणम्॥ १०॥

यज्ञियायां दिशि॥ ११॥

ग्रामाद्वहिः प्राच्यामुदीच्यां वा दिशि कार्य्यमित्यर्थः॥ ११॥

असन्दर्शने ग्रामात्॥ १२॥

यत्रस्थं ग्रामो न पश्यति यत्रस्थो वा ग्रामं न पश्यति तत्र देशे कार्य्यं इत्यर्थः॥ १२॥

ऊर्द्ध्वमर्धरात्रात्। उदित इत्येके॥ १३॥

अनयोरन्यतरस्मिन् काले कुर्य्यात्॥ १३॥

वैद्यं चरित्रवन्तं ब्राह्मणमुपवेश्य सपलाशामार्द्रशाखां यूपं निखाय व्रतत्यौ कुशरज्जू वा रशने अन्यतरया यूपं परिवीयान्यतरयार्धशिरसि पशुं बद्ध्वा यूपे रशनायां वा नियुनक्ति यस्मै नमस्तस्मै त्वा जुष्टं नियुनज्मीति ॥ १४ ॥

यूलार्थं यो वेत्ति असौ वैद्यः यः स्वयं कृतवानसौ चरित्रवान्। अस्मिन् कर्मण्येवंगुणं ब्राह्मणं उपवेशयेत्। आज्यभागान्तं कृत्वा अथ शामितस्यायतनङ्करोति। ततः सपलाशामार्द्रशाखां यूपं यूपार्थं पुरस्तादग्नेर्निखनति। तक्षणं न भवति। शाखामिति वचनात्। सा च यूपप्रमाणा शाखा। व्रतत्यौ कुशरज्जू वा रशने भवतः। व्रतती वल्ली पलाशविशेषः। रशने अन्यतरयेति विहृत्या पाठः कर्त्तव्यः। प्रश्लिष्टत्वात्। तयोरन्यतरया रशनया यूपं परिवीय परिवेष्ट्य अन्यतरया रशनया अर्धशिरसि शृङ्गमध्ये दक्षिणं शृङ्गं यथा बद्धं भवति तथा पशुं बद्ध्वा यूपे तत्परिवीतायां रशनायां वा निबध्नाति प्रत्यक्षं यस्मै नम इति मन्त्रेण। यूपादयो विशेषा अस्मिन्नेव पशौ भवन्ति न पश्वन्तरे। कुतः। पशुकल्पेति विध्यभावात् ॥ १४ ॥

प्रोक्षणादिसमानं पशुना विशेषान् वक्ष्यामः ॥ १५ ॥

प्रोक्षणादिवचनं प्रोक्षणात् प्राक्तनस्य पशुकल्पविहितस्य निवृत्त्यर्थम्। पशुना पशुकल्पेन समानं विशेषमात्रं वक्ष्यामः ॥ १५ ॥

पात्र्या पलाशेन वा वपां जुहुयादिति ह विज्ञायते ॥ १६ ॥

पात्री दारुमयी । पलाशं पर्णम् । वपाहोमकाले पात्र्या पलाशेन वा वपां जुहुयात् । जुह्वापवादः । श्रुत्याकर्षं उक्तम्-श्रुतिमूलत्वदर्शनार्थमित्युक्तं सर्वत्र स्मर्त्तव्यम् ॥ १६ ॥

त्रयाणामपि प्रदानानां होममन्त्रमाह ।

हराय मृडाय शर्वाय शिवाय भवाय महादेवायोग्राय भीमाय पशुपतये रुद्राय शङ्करायेशानाय स्वाहेति ॥ १७ ॥

द्वादशनामको मन्त्रः ॥ १७ ॥

षड्भिर्वोत्तरैः ॥ १८ ॥

उग्रायेत्यादिषट्नामको वा मन्त्रो भवेदित्यर्थः ॥ १८ ॥

रुद्राय स्वाहेति वा ॥ १९ ॥

अयमेकनामको वा भवेदित्यर्थः ॥ १९ ॥

चतसृषु चतसृषु कुशसूनासु चतसृषु दिक्षु बलिं हरेद्यास्ते रुद्र पूर्वस्यां दिशि सेनास्ताभ्य एतं नमस्ते अस्तु मा मा हिंसीरित्येवं प्रतिदिशं त्वादेशनम् ॥ २० ॥

वपास्थालीपाकावदानहोमपर्य्यन्तं कृत्वा स्विष्टकृतः प्रागेकैकस्यां दिशि चतस्रश्चतस्रः कुशसूना निधाय तासु चरुशेषेण मांसशेषेण च बलिं हरेत् । यास्ते रुद्र पूर्वस्यां दिशीति प्रतिदिशं त्वादेशनञ्चार्थ्यं यास्ते रुद्र दक्षिणस्यां दिशि यास्ते

रुद्र प्रतीच्यां दिशि यास्ते रुद्रोदीच्यां दिशीति । दर्भस्तम्बैः सृणैश्च कश्यवद् ग्रथित्वा सर्वेषामग्रं गृहीत्वा एकीकृत्य ग्रथिताः कुशसूना उच्यन्ते ॥ २० ॥

चतुर्भिः सूक्तैश्चतस्रो दिश उपतिष्ठेत कद्रुद्रायेमा रुद्रायाते पितरि मा रुद्राय स्थिरधन्वन इति ॥ २१ ॥

चतुर्भिर्यथाक्रमेण चतस्रो दिश उपतिष्ठेत । सूक्तग्रहणं कद्रुद्रायेत्यस्मिन् सूक्ते पश्चो सोमश्रियमधीत्यादिना रौद्राणां निवृत्त्यर्थम् ॥ २१ ॥

सर्वरुद्रयज्ञेषु दिशामुपस्थानम् ॥ २२ ॥

एतच्च दिशामुपस्थानं सर्वरुद्रयज्ञेषु भवतीत्यर्थः । एतमेव देवमध्ये गोष्ठस्य यजेतेति । रौद्रकवेधुकाश्चिर्वपेदित्यादिषु च विज्ञेयम् ॥ २२ ॥

तुषान् फलीकरणांश्च पुच्छञ्चर्मशिरः पादानित्यग्नावनुप्रहरेत् ॥ २३ ॥

स्थालीपाकव्रीहीणां ये तुषाः फलीकरणाश्च । फलीकरणानाम सूक्ष्मकणाः तांश्च पुच्छादीनि च अग्नावनुप्रहरेत् ॥२३॥

श्रोगं चर्मणा कुर्वीतेति शांवत्यः ॥ २४ ॥

शांवत्यश्चाचार्यः कर्मणा श्रोगमुपानदादि कुर्वीतेति मन्यते ॥ २४ ॥

उत्तरतोऽग्ने र्दर्भवीतासु कुशसूनासु वा शोणितं निनयेच्छासिनीर्घोषिणीर्विचिन्वतीः समश्नुतीः सर्पा एतद्वोऽत्र तद्धरध्वमिति ॥ २५ ॥

घात्मानं गायत्र्याभिषिच्य त्वन्नो अग्ने वरुणस्य विद्वानिति द्वाभ्यामृत्तरवमन्त्रीणायतीति च सूक्तेन पुनः स्नायान्मूर्द्धि वाभिषिच्चेत्तद्विष्णोः परमम्पदमन्त्रं रक्षाणो अंहसो यत्किञ्चेदं वरुणदैव्ये जने इत्येता जपेत्, स्रोतोऽभिमुखः सरित्सु स्नायादन्यत्रादित्याभिमुखोऽथ साचताभिरद्भिः प्राङ्मुख उपवीती देवतीर्थेन व्याहृतिभिर्व्यस्तसमस्ताभिर्ब्रह्मादीन् देवान् सकृत्सकृत्तर्पयित्वाथोदङ्मुखः निवीती सयवाभिरद्भिः प्राजापत्येन तीर्थेन कृष्णद्वैपायनादीन् ऋषींस्ताभिर्व्याहृतिभिर्द्विर्द्विस्तर्पयित्वाथ दक्षिणाभिमुखः प्राचीनावीती पितृतीर्थेन सतिलाभिरद्भिर्व्याहृतिभिरेव सोमः पितृमान् यमो अङ्गिरस्वानग्निस्वात्ताः कव्यवाहन इत्यादींस्त्रींस्त्रींस्तर्पयेदेतत् स्नानाङ्गतर्पणमथ तीरमेत्य दक्षिणाभिमुखः प्राचीनावीती, ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः। ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम्॥ इति वस्त्रं निष्पीड्य यज्ञोपवीत्यप उपस्पृश्य परिधानीयमभ्युक्ष्य परिधाय द्वितीयस्योत्तरीयं पर्य्युक्षितं प्रावृत्य द्विराचामेद्‌यथोक्तसन्ध्यामुपासीतेदं प्रातःस्नानविधानम् ॥ ६ ॥

अथ मध्यन्दिने तीर्थमेत्य धौतपाणिपादमुखो द्विराचम्यायतप्राणः स्नानं सङ्कल्प्य दर्भपवित्रपाणिः शुचौ देशे खनित्रेण भूमिं गायत्र्यास्त्रेण खात्वोपरिस्थदश्चतुरङ्गुलमुद्रासाधस्तान्मृदं तथा खात्वा गायत्र्यादाय गर्त्तं मुद्रासितया मृदा परिपूर्य्य मृदमुपात्तां शुचौ देशे तीरे निधाय गायत्र्या प्रोक्ष्य तच्छिरसा त्रेधा विभज्यैकेन मूर्द्धं आनाभेरपरेण चाधस्तादङ्गमनुलिप्याप्स्वाङ्गुष्ठ्य क्षालयित्वादित्यन्निरीक्ष्य तं ध्यायन् स्नायादेतन्मलस्नानमाहुरथ तीरे द्विराचम्य तृतीयमस्त्रेणादाय सव्ये पाणौ कृत्वा व्याहृतिभिस्त्रेधा विभज्य दक्षिणभा-

गमस्रेण दिक्षु दशसु विनिक्षिप्योत्तरन्तीर्थे चिप्वा तृतीयञ्ज-यत्नाभिमन्त्रितमादित्याय दर्शयित्वा तेन मूर्ध्न आपादात् गायत्र्या प्रणवेन वा सर्वाङ्गमनुलिप्य सुमित्रान आप ओषधय सन्त्विति सकृदद्भिरात्मानमभिषिच्य दुर्मित्रास्तस्मै सन्तु योऽ-स्मान्द्वेष्टि यञ्च वयन्द्विष्म इति ऋच्छेषमद्भिः क्षालयेदथ वरुण-प्रार्थना तर्पणान्तेनोक्तेन विधिना स्नायान्नास्मिन् प्राक् ब्रह्म-यज्ञतर्पणाद्वस्त्रं निष्पीडयेदपुत्रादयो ह्यन्ते तर्पणं कुर्येष स्नान-विधिस्तदितदसम्भवेऽद्भिरेव कुर्याद्धोमदिनादिषु च, न च गृहे मृदा स्नायान्न च शीतोदकेन शीतोष्णोदकेन गृहे स्नायान्म-न्त्रविधिं वर्जयेद्बहिर्वा शुचौ देशे सर्वं पश्चात् कुर्यादिति ॥१०॥

अथाशक्तस्य मन्त्रस्नानं शुचौ देशे शुचिराचान्तः प्राणाना-यम्य दर्भपाणिः सव्ये पाणावपः कृत्वा तिसृभिरापो हिष्ठी-याभिः पच्छः प्रणवपूर्वं दर्भोदकैर्मार्जयेत् । पादयोर्मूर्ध्नि हृदये मूर्ध्नि हृदये पादयोर्हृदये पादयोर्मूर्ध्नि चाथार्धर्चशो मूर्ध्नि हृदये पादयोर्हृदये पादयोर्मूर्ध्नि चाथ ऋक्शो हृदये पादयोर्मूर्ध्नि चाथ तृचेन मूर्ध्नीति मार्जयित्वा गायत्र्या दश-धाभिमन्त्रिता आपः प्रणवेन पीत्वा द्विराचामेदेतन्मन्त्रस्ना-नम् ॥ ११ ॥

अथ वैश्वदेवो दिनस्य प्रारम्भो नात्र पाकयज्ञतन्त्रमग्नि-मौपासनं पचनं वा परिसमूह्य पर्युक्ष्यायतनमलङ्कृत्य सिद्ध-हविष्यमभिघार्योद्धृत्याद्भिः प्रोक्ष्योदगुद्वास्याग्नेः प्रत्यक् दर्भेषु निधाय सर्पिषाभ्यज्य सव्यं पाणितलं हृदये न्यस्य ससदव-दानेन पाणिना जुहुयात् सोमाय वनस्पतय इत्येकाहुतिं दिवाचारिभ्यो विश्वेभ्यो देवेभ्य इति सर्वभूतानां विशेषणं प्रजापतिर्वलिरिष्यते प्रधानबलिवदक् सुपर्णवलिस्तादिदमन्त्रा-भावे तपकृत्वादिभिः कुर्यादिके चान्ते च परिसमुह्य पर्युक्ष्ये-

दैकेनात्र तन्त्रमिति पर्य्यूहवीचणे अपि न कुर्वन्ति केवलं हुत्वोपतिष्ठन्ते विश्वेदेवाः सर्वे देवास्तद्दैवत्यमितीदं वैश्वदेवम् ॥ १२ ॥

अथ स्वस्तिवाचनमृद्धिपूर्त्तेषु स्वस्त्ययनं वाचयेदित्याचार्य्याः ऋद्धिर्विवाहान्ता अपत्यसंस्काराः प्रतिष्ठोद्यापने पूर्त्तं तत्कर्मणा आद्यन्तयोः कुर्य्याच्छुचिः स्वलङ्कृतो वाचयीत तथाभूते सद्मनि मङ्गलसम्भारभृतियुग्मान् ब्राह्मणान् प्रशस्ताचारलक्षणसम्पन्नानर्घ्यादिभिरभ्यर्च्य दक्षिणया तोषयेदथ प्राङ्मुखाः प्रशस्ता दर्भपाणयस्तिष्ठेयुस्तद्दक्षिणतो वाचयितोदङ्मुखः संस्कार्य्यो वाचयितुर्दक्षिणपार्श्वमातिष्ठेयुरथ वाचयिता दर्भपाणिरपां पूर्णमुदकुम्भं स्वर्चितं सपल्लवमुखं धृत्वा तिष्ठन् समाहितो मनः समाधीयतामिति ब्राह्मणान् ब्रूयात् समाहितमनसः स्म इति ते ब्रूयुः प्रसीदन्तु भवन्त इति वाचयिता प्रसन्नाः स्म इतीतरेऽथ वै सर्वे संहृत्य शान्तिः पुष्टिः तुष्टिर्वृद्धिरविघ्नमायुष्यमारोग्यं शिवं कर्म कर्मसमृद्धिर्धर्मसमृद्धिः पुत्रसमृद्धिर्वेदसमृद्धिः शास्त्रसमृद्धिर्धनधान्यसमृद्धिरिष्टसमृद्धिरित्येतानि पञ्चदशतन्त्राण्युक्तानि तन्नाम्ना कर्मदेवता प्रीयतामिति ब्रूयुरथ वाचयिता पूर्ववत्तल्लिङ्गमन्त्रान् पठित्वा त्रिस्त्रिर्मन्द्रमध्योच्चस्वरैरों पुण्याहं भवन्तो ब्रुवन्तु स्वस्ति भवन्तो ब्रुवन्तु ऋद्धिं भवन्तो ब्रुवन्त्विति ब्रूयात्तेऽपि तथा प्रत्येकं प्रतिब्रूयुरोमित्यृध्यतामित्यृद्धौ प्रतिब्रूयुरथ प्राङ्मुखमासीनं सामात्यकर्त्तारं ब्राह्मणाः सपल्लवदर्भपाणयः प्रत्यङ्मुखास्तिष्ठेयुः शान्तिपवित्रलिङ्गाभिः ऋग्भिरभिषिञ्चेयुः पुरन्ध्र्यो नीराजनादि कुर्य्युः ॥ १३ ॥

अथ होष्यन्धर्मे किञ्चिदुच्छ्रितासमाऽस्नात्रिमा भूमिस्थण्डिलमुच्यते तदिषुमात्रवरं सर्वतो गोमयेन प्रदक्षिणमुपलिप्य

यज्ञियशकलं मूलेनोल्लिख्य शकलं प्रागग्रं निधाय स्थण्डिलमभ्युक्ष्य शकलमाग्नेय्यां निरस्याप उपस्पृशेत् एष आयतनसंस्कारस्ततोऽग्निं व्याहृतिभिरभ्यात्मानं प्रतिष्ठाप्यान्वादधाति कर्म सङ्कल्पपुरःसरं द्रव्यदेवताग्रहणाय द्वयोस्त्रिसृणां वा समिधमभ्याधानमन्वाधानमथेध्माबर्हिषी सन्नह्य दर्भैः प्रादेशमात्रैस्त्रिसन्धी त्रिवृतौ रज्जू कुर्यात्पाणिभ्यां सव्योत्तराभ्यां पूर्वं वर्त्तयेत्ततो दक्षिणोत्तराभ्यामन्ते प्रदक्षिणावृतं रज्जुं कुर्यादेतद्रज्जूकरणं, प्रथमां रज्जुमुदगग्रामास्तीर्य प्रादेशमात्रं दर्भमुष्टिं छित्त्वा प्रागग्रान्तस्यां निधाय तथा बर्हिर्द्विरावेष्टयित्वा तन्मूलस्य द्विरावेष्ट्य तां प्रथमवेष्टनस्याधस्तादुन्नयेदेवं द्वितीययेध्मं सकृदावेष्ट्य सन्नह्येदरत्न्यायाम इध्मः पञ्चदशदारुकस्तदुपरि निदध्यादेतदिध्माबर्हिषोः सन्नहनमथ सोदकेन पाणिना प्रागुदीच्या आरभ्य प्रदक्षिणमग्निस्त्रिः परिसमूह्य प्रादेशमात्रैर्दर्भैः प्रदक्षिणं प्राच्यादिषु प्रतिदिशमुदक्संस्थं परिस्तृणीयाद्दक्षिणोत्तरयोः सन्धिषु मूलाग्रैराच्छादयेत् राधिष्ठान् वा दर्भांस्तयोस्तृणीयादुत्तरतः पात्रासादनाय दक्षिणतो ब्रह्मासनाय कांश्चिद्दर्भानास्तीर्याग्निं पर्युक्षेदेषोऽग्निसंस्कारोऽथ तेषु दर्भेषु पात्राणि न्यग्बिलानि द्वन्द्वं प्रागग्रमुदगपवर्गं प्रयुनक्ति प्रोक्षणपात्रस्रुवौ चमसाज्यपात्रे इध्माबर्हिषीत्याज्यहोमेषु तथा चरुस्थालीप्रोक्षणपात्रे दर्वीस्रुवौ चमसाज्यपात्रे इध्माबर्हिषी चेति दर्विहोमेषु प्रोक्षणपात्रमुद्धृत्य पवित्रमन्तर्धायाप आसिच्य तूष्णीं ताः पवित्राभ्यां त्रिरुत्पूय पात्रास्य त्तानानि कृत्वेध्मं विस्रस्य पात्राणि ताभिरद्भिर्युगपत् त्रिः प्रोक्षेदेतत् पात्रासादनम् ॥ १४ ॥

अथ चमसं प्रत्यगग्नेर्निधाय ते पवित्रेऽन्तर्धायाद्भिः पूरयित्वा गन्धादिं प्रक्षिप्य दक्षिणोत्तराभ्यां पाणिभ्यां नासिका-

न्त्समुद्धृत्योत्तरतोऽग्नेर्दर्भेषु निधाय दर्भैः प्रच्छादयेदेतत् प्रणीताप्रणयनमथ ते एव पवित्रे प्रागग्नेः आज्यपात्रे ऽन्तर्धायाज्यमासिच्य बहिः परिस्तरणादङ्गारानुदगपोह्य तेष्वाज्यमधिश्रित्योल्मुकेनावज्वाल्य दर्भाग्रे प्रच्छिद्य प्रोक्ष्याज्ये प्रास्य ज्वलता तेनैवोल्मुकेनाज्यन्त्रिः परिहृत्योल्मुकन्निरस्याप उपस्पृश्याज्यकर्षन्निवोदगुदास्योङ्गारानतिसृज्याज्यमुत्पूय पवित्रे प्रोक्ष्याग्नौ प्रास्याप उपस्पृशेदेष आज्यसंस्कारोऽथ बर्हिरात्मनोऽग्रे प्रागग्रमास्तीर्य्य तत्राज्यमासाद्य सहदर्भैर्दर्वीस्रुवावादायाग्नौ प्रताप्य दर्वीं निधाय स्रुवं सव्येन धारयन्दक्षिणेन पाणिना दर्भाग्रैर्बिलं प्रागारभ्य प्रादक्षिण्यं प्रागपवर्गन्त्रिः परिमृज्य तैरेव बिलपृष्ठमभ्यात्मन्त्रिः संमृज्याथ पृष्ठादारभ्य यावदुपरिबिलन्दण्डं दर्भमूलैस्त्रिः संमृज्य स्रुवं प्रोक्ष्य प्रताप्योदगाज्याद्बर्हिष्यासाद्योदकस्पृष्टैस्तैरेव दर्भैरेवं दर्वीं च संस्कृत्य स्रुवादुदङ्निधाय दर्भाः प्रोक्ष्याग्नौ प्रहरेदेष स्रुक्स्रुवसंमार्गः॥ १५॥

अथ ब्रह्मास्ति चेत् क्रियेत, स प्राक् प्रणीताप्रणयनात्समस्तपाण्यङ्गुष्ठो भूत्वाग्रे णाग्निं परीत्य दक्षिणत आस्तीर्णेषु दर्भेषु निरस्तः परावसुरिति तृणमङ्गुष्ठोपकनिष्ठाभ्यां नैरृत्यान्निरस्याप उपस्पृश्येदमहमर्वावसोः सदने सीदामीत्युदङ्मुख उपविश्य बृहस्पतिर्ब्रह्मा ब्रह्मसदनम् आशिष्यते बृहस्पते यज्ञङ्गोपायेति मन्त्रं ब्रह्मा जपेदपां प्रणयने ब्रह्मन्नपः प्रणेष्यामीत्यतिसृष्टः ॐ भूर्भुवः स्वर्बृहस्पतिप्रसूत इति जपित्वो प्रणयेदतिसृजेत्सर्वदा च यज्ञमना भवेदेके नेच्छन्ति निरसनमुपवेशनं जपः प्रायश्चित्तहोमः संस्थाजपेनोपस्थानञ्चेति पञ्चकर्माणि ब्रह्मणः॥ १६॥

अथ पार्वणस्थालीपाकस्तस्य पौर्णमास्यामारम्भोऽग्निम-

ग्नीषोमौ पौर्णमास्यान्देवते अग्निरिन्द्राग्नी चामावास्यायां देवते अपः प्रणीय शूर्पे व्रीहीन्निरूप्य प्रोक्ष्य प्रागग्रीवमुत्तरलोमकृष्णाजिनमास्तीर्य तत्रोलूखलं निधाय तानवहत्य तण्डुलांस्त्रिः फलीकृतांस्त्रिः प्रक्षाल्य श्रपयेद्यदि सहश्रपयेच्चरुं विहृत्येदममुष्मा इदममुष्मा इत्यभिमृशेत् स्विष्टकृतं द्विरुपरिष्टादभिघारयेत् पद्मावती ह्रावती पुरस्तादवद्येद्दिघारन्तु विभंस्याग्नौ प्रायायाग्नेयतो देवा इदं विष्णुरित्येताभिर्व्याहृतिभिश्च जुहुयादेताः सर्वाः प्रायश्चित्ताहुतयः एता ब्रह्मणा कर्त्तव्याः परीत्य प्रत्यगुदीच्यामवस्थाय जुहुयादथ बर्हिषि पूर्णपात्रं निनीय ताभिरद्भिरापो अस्मान्मातरः शुन्धयन्त्विदमापः प्रवहतेत्येताभ्यां सुमित्रा न आप ओषधयः सन्त्वित्येतेन चात्मानं शिरसि मार्जयेत्संस्कार्यमपि संस्कारकर्मस्वथाग्निहोमश्च स इति संस्थाजपेनोपतिष्ठते ततो ब्रह्मा चाथ कर्त्ताग्नेः परिसमूहनपर्युक्षणे कुर्यादेतत्तन्त्रमन्येषामस्थालीपाकवत् सुकृतकर्मन्त्रान् जुहुयात् ॥ १७ ॥

अथ नित्यमौपासनन्तस्य सायमारम्भोऽनस्तमित आदित्ये सायमन्तः प्रादुष्करणमनुदिते प्रातः प्रदोषान्तः सायं होमकालः सङ्गवान्तः प्रातर्नीत तन्त्वमिथ्यतेऽग्निं परिसमुह्य परिस्तीर्य पर्युक्ष्य होम्यमपक्वमुल्मुकेनावज्वाल्य तेनैव त्रिः परिहृत्योल्मुकन्निरस्येत् पक्वमुदगङ्गारेष्वधिश्रित्य प्रोक्ष्योदगुद्वास्य तानङ्गारानतिसृजेदेष होम्यसंस्कारः, पयोदधिसर्पिर्यवागूरोदनस्तण्डुलाः सोमस्तैलमापो व्रीहयो यवास्तिला इति होम्यानि, तण्डुला नीवारश्यामाकयावनाला व्रीहिशालियवगोधूमप्रियङ्गवः स्वरूपेणातिहोम्यास्तिलास्वरूपेणैव अतस्तुःषष्टिराहुतिः व्रीहियवानान्तदर्धन्तिलानान्तदर्धं सर्पिस्तैलं

च तिलस्य तिलातसीकुसुम्भानां येन प्रथमामितां जुहुयात्तेनैव द्वितीयां जुहुयाद्येनैव सायं जुहुयात्तेनैव प्रातः सायं प्रातर्होमौ सायं वा समस्येत्तु प्रातः सायं होमौ ॥ १८ ॥

अथ पुनराधानमनुगतेऽग्निं शिष्टागारादानीयोक्तवदुपसमाधाय परिसमूह्य परिस्तीर्य्य पर्य्युक्ष्याज्यमुत्पूयायाश्चाग्न इत्येकामाज्याहुतिं हुत्वा यथापूर्वं परिचरेदेवमाद्वादशरात्रा दत ऊर्द्ध्वं विवाहगृहप्रवेशहोमाभ्यामेकतन्त्राभ्यामादध्यात् तत्र विवाहाज्याहुतयो लाजाहुतयो गृहप्रवेशाज्याहुतयो ध्रुदर्शनञ्च भवति कर्त्तैव लाजानावपत्येतत्पुनराधानविव्यहोमतीत्य मनस्वत्या चतुर्गृहीतं जुहुयादाद्वादशरात्रादूर्द्ध्वं पुनराधानमेव कुर्य्यात् ॥ १९ ॥

अथानेकभार्य्यस्य यदि पूर्वगृह्याग्नावेवानन्तरो विवाहः स्यात्तेनैव सा तस्य सह प्रथमया धर्म्माग्निभागिनी भवति, यदि तु लौकिके परिणये तं पृथक्त्वेन परिगृह्य पूर्वेणैकीकुर्य्यात्तौ पृथगुपसमाधाय पूर्वस्मिन् पूर्वया पत्न्यान्वारब्धोऽग्निमीळे पुरोहितमिति सूक्तेन प्रत्यृचं हुत्वोपस्थायायन्ते योनिरृत्विय इति तं समिधमारोप्य प्रत्यवरोहेति द्वितीये वरो ह्याज्यभागान्त कृत्वोभाभ्यामन्वारब्धोऽग्निमीळे जुहुयादग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निना पाहि नो अग्न एकयेति तिसृभिस्तोदमधिमन्थनमिति च तिसृभिरथैनं परिचरेन्नूतामनेन संस्कृत्यान्यया पुनरादध्यादथ वाग्निं विभज्य तद्भागेन संसृज्याद्बह्वीनामप्येवमेवाग्नियोजनङ्कुर्य्याद्गोमिथुनं दक्षिणा ॥ २० ॥

अथ कन्यावरणं कन्यां परिणेष्यमाणो द्वौ चत्वारोऽष्टौ वरपितुरामान् प्रशस्ताकारकर्म्मणो नृचरा ऋजवः सन्तु पन्था इति प्रहिणुयादेतावतीभिः पुरन्ध्रीभिः सहितामङ्गलगीत-

तूर्याभ्याङ्कन्यागृहमेत्य शुभे पीठासने प्राङ्मुखासीनाया दात्रृ-ज्ञातिबान्धवोपेतायाः कन्यायाः पाणौ फलं प्रदाय कन्यावरण-काले वृणीरन्नासीनाः प्रत्यङ्मुखा वसिष्ठगोत्रोद्भवायामुष्य प्रपौ-त्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशीलनाम्ने वराय वत्सगो-त्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीं इमाङ्कन्याभार्यात्वाय वृणीमह इति ब्रूयुरथ दाता भार्या-ज्ञातिबन्धुसमेतो यथोक्तमनूद्य वृणीध्वमिति ब्रूयादेवं त्रिः प्रयुज्य दाता प्रदास्यामीति चोचैस्त्रिर्ब्रूयादथ ब्राह्मणा उक्तस्व-स्त्ययनाः शिवा आपः सन्तु सौमनस्यमस्त्वक्षतं चारिष्टं चास्तु दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्त्वित्युक्तोनद्वः सत्यम-स्त्विति अनूद्य समानीव आकूतः प्रसुग्मन्ताधियः सानस्य सक्षणोत्येताः पठेयुः पुरन्ध्र्यः कन्यायै कल्याणान् कुलधर्माचा-रान् कुर्युः ॥ २१ ॥

अथोपयमनं लक्षण्यो वरो लक्षणवतीं कन्यां यवीयसीम-सपिण्डामसगोत्रजामविरुद्धसम्बन्धामुपयच्छेत् पितृतः सप्तपुरुषं सापिण्ड्यमातृतः पञ्चपुरुषं भृगुवत्साङ्गिरसश्च प्रवरे च एकर्षि-योगे सगोत्रा एकर्षियोग इतरे दम्पत्योर्मिथः पितृमातृसाम्य-विरुद्धः सम्बन्धो यथा भार्यास्वसुर्दुहिता पितृव्यपत्न्याः स्वसा चेति केचिन्मातृगोत्रतां च वर्जयित्वा तदपत्यमसगोत्रं स्या-दिति सुस्नातोऽलङ्कृतो वरः स्वस्ति वाचयित्वा सहितः स्वर्चिते-र्ब्राह्मणैः पुरन्ध्रीभिर्ज्ञातिबान्धवैः पदातिभिर्मङ्गलगीततूर्यघो-षाभ्यां सम्बन्धिनो गृहमेत्य चतुष्पदे सोत्तरच्छदे हरितदर्भा-स्तीर्णे भद्रपीठे प्राङ्मुख उपविश्य तस्य पुरस्तात् प्रत्यङ्मुखीं भद्रपीठासीनां सुस्नातामलङ्कृतामहतवाससं स्रग्विणीं कन्यां पुरस्कृत्य दाता सामात्य उपविश्येदं विधिवदभ्यर्चयेदथ दक्षि-णतः पुरोधा उदङ्मुख उपविश्य मध्ये प्रागग्रोदगग्रान्द-

भीनास्तीर्थ्यं तैजसमपां पूर्णं कलशन्निधाय व्रीहियवा-नोप्य गन्धादिभिरलङ्कृत्य दूर्वापल्लवैर्मुखमवस्तीर्य्याप्लिङ्गाभि-र्ऋग्भिरभिमन्त्र्य ताभिरद्भिः प्रयोजयेदथ दाता पुण्याहादीनि वाचयित्वा शिवा आपः सन्तु सौम-नस्यमस्त्वक्षतञ्चारिष्टञ्चास्तु दीर्घमायुरस्तु शान्तिः पुष्टि-स्तुष्टिश्चास्तु तिथिकरणमुहूर्त्तनक्षत्रसम्पदस्त्वित्युक्त्वा भार्य्या-दिसमेतः कन्यां प्रतिगृह्य वत्सगोत्रोत्पन्नाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां वसिष्ठगोत्रो-द्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशीलना-म्नेऽस्मै वराय सम्प्रददे कन्यां प्रतिगृह्णातु भवानिति ब्रुवन् वरस्य पाणौ हिरण्यमुपधाय कलशोदकधारामासिञ्चेत् मनसा प्रजापतिः प्रीयतामिति ब्रूयादथ शिरसि पुण्याहाशिषो वाच-यित्वा दक्षिणेऽंसे कन्यामभिमृश्य क इदङ्कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामं समुद्रमा-विश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा-ददातु पृथिवी प्रतिगृह्णात्विति जपित्वा प्रजापतिमनुस्मृत्य धर्मप्रजासिद्ध्यर्थं कन्यां प्रतिगृह्णामीति ब्रूयादेवं त्रिः प्रयुज्य पुरोधा दातृवरौ प्रति ऋतस्य हि शुरुधः सन्ति पूर्वीरिति तिस्रो जपित्वेतदः सत्यसम्बन्धमस्त्विति ब्रूयात् ॥ २२ ॥

अथानयोर्निरीक्षणं स्वलङ्कृते वेश्मनि मङ्गलगीततूर्य्यनि-र्घोषे पूर्वापरावरण्युच्छ्रितौ हस्तान्तरालौ शुक्लतण्डुलराशी कृत्वा मध्ये स्वस्तिकान्तिरस्करिणीं धारयेयुरथ पूर्वस्मिन्राशौ प्रत्यङ्मुखीं गुड़जीरकपाणिं कन्यां स्थापयेयुरपस्मिन् प्राङ्मुखं तथाभूतं वरं तौ मनसेष्टदेवतां ध्यायन्तौ तिष्ठन्तौ ब्राह्मणाः सूर्य्यसूक्तं पठेयुः पुरन्ध्र्यो मङ्गलगीतानि कुर्य्युरथ ज्योति-र्विदादिष्टे काले प्रविष्टे सद्यस्तिरस्करिणीमुदगपसार्य्य कन्या-

वरौ परस्परगुडजीरकानवकिरतः परस्परं निरीक्षेयातामभ्रा-
तृघ्नीमिति तामीक्षमाणो जपत्यघोरचक्षुरपतिघ्न्येधीति तथे-
क्षमाणोऽथास्या भ्रुवोर्मध्यं दर्भाग्रेण परिमृज्य दर्भं निरस्याप
उपस्पृशेदथ ब्राह्मणा बान्धवाः पुरन्ध्र्यस्तौ आशीर्भिरभिन-
न्दयेयुः ॥ २१ ॥

अथानयोरार्द्राक्षतारोपणं तैजसेन पात्रेण क्षीरमानीय
घृतमासिच्यान्येनार्द्राक्षततण्डुलानथ तथास्थितयोर्वधूवर-
योर्वर्धनकमेतत् कारयेयुरक्षतं क्षीरमायुष्टं नमरिष्टरक्षता
अप एतेषामारोपणमिष्यते वरः प्रक्षालितपाणिर्वध्वाः प्रक्षा-
लितेऽञ्जलौ क्षीरघृतं पाणिना द्विरुपस्तीर्य द्विस्तण्डुलान-
ञ्जलिना वपति यथा पूर्व्येन ततो द्विरुपरिष्टादभिघारयत्येवं
वराञ्जलावन्यस्तण्डुलापूरणं कुर्याद्दाता तयोरञ्जल्योर्हिरण्य-
मवदध्यादथ वरः कन्याञ्जलौ स्वाञ्जलिं धारयेद्दाता कन्यां
धारयतु दक्षिणाः पान्तु बहुदेयञ्चास्तु पुण्यं वर्धतां
शान्तिः पुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्तनक्षत्रसम्पदस्त्वि-
त्युक्त्वा कन्यासमुत्क्षिप्य तदञ्जल्यक्षतान्वरमूर्ध्न्यारोपयेद्वरोऽपि
तन्मूर्ध्नि स्वाञ्जल्यक्षतानारोपयेदेवन्त्रिर्वधूपूर्वं वराञ्जलौ वधू-
स्तण्डुलपूरणं कुर्यात्तदञ्जलावन्योऽथ समारोपणं कारयेदिदानीं
दाता वराय गोभूमिदासीयानशयनमश्वादिकमनुदानं दद्या-
दथ पुरोधाः कांस्यपय आसिच्यौदुम्बर्यार्द्रया शाखया सपला-
शया सहिरण्यपवित्रया सदूर्वापवित्रयाभिषिञ्चेदब्लिङ्गाभि-
र्ऋग्भिरथ वधूवरौ स्रग्वरपुष्पं क्षीरघृतेनाप्लाव्य परस्परति-
लकङ्कुर्वतः कण्ठे स्रजञ्चामुञ्चतः कौतुकसूत्रञ्च करे बध्नीयाता-
मथ पुरोधास्तयोरुत्तरीयान्तयोः पञ्चपूगफलानि विबध्नन्-
दक्षिणङ्गणाधिपमनुस्मृत्य गणानान्त्वा गणपतिं हवामह इत्या-
तून इन्द्रक्षुमन्तमिति च वधूवरयोरुत्तरीयान्तौ च नीललोहितं

भवतीति बध्नीयादथ दाता सभार्य्यो वृद्धाः पुरन्ध्र्यो ज्ञातिबा-
न्धवाश्च क्रमाद्दधीभिराद्रीक्षतारोपणं कुर्य्युः ॥ २४ ॥

अथर्त्तुमत्याः प्राजापत्यमृतौ प्रथमे अनुकूलेऽहनि सुस्नात-
यान्वारब्धः प्राजापत्यस्य स्थालीपाकस्य हुत्वैता आज्याहुती-
र्जुहुयाद्विष्णुर्योनिमिति तिस्रो नेजमेषेति तिस्रः प्रजापते न
त्वदित्येकाधातो मूर्द्धगपनः शोशुच दर्भमित्यभिमृश्य याः
फलिनीर्या अफला इति जपित्वा बधेनदस्यु प्राहचातयस्वेति
षड्भिरग्निस्तुवे स्वस्तमामिति द्वाभ्यामग्निमुपस्थाय सूर्य्यो नो
दिवस्पात्विति सूक्तेनादित्यमुपतिष्ठेत । अथ गर्भलभनस्ता-
वनुकूलायां निशि स्वलङ्कृते सुगन्धवासिते वेश्मनि तथाभूते
पर्य्यङ्कशयने सुस्नातामलङ्कृतां शुक्लवसनां स्रग्विणीं भार्य्यां स्वय-
न्तथाभूतः प्रवेश्य दूर्वां पिष्ट्वा अश्वगन्धां वा सूक्ष्मेण वाससा
संस्थाप्योदीर्ष्वातः पतिवतीति द्वाभ्यां स्वाहाकारान्ताभ्यामुभयो-
र्नासाबिलयोर्निषिच्य संवेश्य गन्धर्वस्य विश्वावसोर्मुखमसीत्यु-
पस्थमभिमृश्य विष्णुर्योनिं कल्पयत्विति द्वाभ्यां विहृत्य यो
गर्भमोषधीनामङ्कगर्भमदधामोषधीष्विति जपित्वोपगच्छेत्
प्राणेते रेतो दधाम्यसावित्यनुप्राण्याययथा भूमिरग्निगर्भा यथा
द्यौरिन्द्रेण गर्भिणी वायुर्यथा दिशाङ्गर्भ एवन्ते गर्भं दधाम्य-
साविति हृदयमभिमृशेन्नैक उपगमने मन्त्रविधिमिच्छन्ति
नह्यनेन किञ्चित् संस्क्रियत इति त ओषधीभिर्निषेकं कृत्वो-
पगच्छन्ति ॥ २५ ॥

अथ जातकर्म पुत्रे जाते शुचान्येतालम्भादग्निरिन्द्रः प्रजा-
पतिर्विश्वेदेवा ब्रह्मेत्यनादेशदेवता हुत्वा प्राक् स्विष्टकृतः
सर्पिर्मधुप्राशनादि कुर्य्यादेवमिष्ट्वा भणं चतुर्थे मासि पूर्य्यमाण-
पक्षे स्वस्ति वाचयित्वा स्विष्टकृतः प्राक् सुस्नातालङ्कृतं कुमार-
मादाय सह भार्य्या ज्ञातिबान्धवैः पुरन्ध्रीभिश्च मङ्गलतूर्य्यनिर्घो-

येन गृहाद्विनिष्क्रम्य देवतायतनमेत्य देवतामुपहारेणाभ्यर्च्या-शिषो वाचयित्वायतनं प्रदक्षिणीकृत्य गृहमेयात्सम्बन्धिनो वा गृह्णीत्वा नयेदेवमन्नप्राशनादावपीच्छायामनादिष्टदेवता यष्टव्याः ॥ २६ ॥

इत्याश्वलायनगृह्यपरिशिष्टे प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः ।

अथ ग्रहयज्ञश्चैत्ययज्ञश्चेत्यमुपयाचितमुच्यते तत्र भवाः शान्तिपुष्टिदा देवताश्चैत्याः शान्तिञ्च खलु पुष्टिं च सर्वे ग्रहाः समुपयाचन्ते ततश्चैत्या आदित्य इन्दुरङ्गारकः सौम्यो गुरुर्भार्गवः शनैश्चरो राहुः केतुरिति नवग्रहास्ते हि स्वस्वगत्या जगदभिगच्छन्ति तानुदगयनादिषु पुण्यकालेषु यजेत शान्तये सद्य उद्भूतेषु माङ्गल्यादिष्वाभ्युदयिकं करिष्यमाणो ग्रहयज्ञं कुर्यादनाभ्युदयिकं हि शान्तिकर्म यदि तदानुकूल्यकामः कामं प्रागभ्युदयात्सप्ताहान्तरितात् कुर्यात्तं दशपराहुतीः स्वयमेकः कुर्यादूर्ध्वमापञ्चशतञ्चत्वार ऋत्विजः स्युराशतं वरमष्टौ नवम आचार्यः स्वयमेव वा यदि स्वयमाचार्यः स्यात्तद्भागं कल्पविदे दद्यात्तान्विधिवद्वरयित्वार्चयेदाचार्य्य आदित्याय जुहुयादितरेभ्य इतरे पूर्वोक्तवत्तन्त्रमाचार्यः कुर्यात्तदितरेभ्योऽन्वारमेरन् ॥ १ ॥

अथास्य सम्भाराद्हस्तमात्रावरञ्चतुरस्रकुण्डं स्थण्डिलं वा संस्कृत्य तत ईशान्यां कुण्डवदायताच्चतुरस्राच्चतुरस्रद्व्यङ्गुलोच्छ्रितां विस्तृतान्त्रिभूमिकां ग्रहवेदिं कुर्यात्तस्याञ्च शक्तोच्छितण्डुलैः सकर्णिकमष्टदलं अम्बुजमुल्लिख्य कर्णिकायान्दलेषु च यथास्थानं ग्रहपीठानि स्थापयेदुदीच्यां धान्यपीठे तैजसं मृन्मयं वा नवमनुलिप्तालङ्कृतं प्रथममभिषेककुम्भंविधाय प्रणव

सापो महिमानमित्य् चाद्भिः पूरयित्वा पञ्चगव्यानि पञ्चामृतानि नवपर्वतधातून् नवपवित्रसदो नवरत्नानि प्रक्षिप्य दूर्वापल्लवै-र्मुखमाच्छाद्य वस्त्रयुग्मेन वेष्टयित्वा समुद्रादीनि पुण्यतीर्था-न्यावाह्य कुम्भमभिमृश्याप्लिङ्गा वारुणीः पावमानीश्च जपेत् ॥ २ ॥

अथार्चनाङ्गानि ताम्रं स्फटिकं रक्तचन्दनं कुङ्कुमं सुवर्णं न्तदेव रजतं लोहं सीसकं कांस्यमिति नवप्रतिमाद्रव्याणि, सुवर्णमेकमेव वा सर्वेषां, रक्तचन्दनं मलयजो देवदारुः कुङ्कुमो मनःशिला शङ्खपिष्टस्तिलपिष्टं केतकीरजः कस्तूरीति नवानु-लेपनानि, मलयज एक एव वा सर्वेषां, रक्तपद्मं कुमुदं रक्तक-रवीरं पाटलं चम्पकं कुन्दमिन्दीवरं कृष्णधुस्तूरस्तचित्रवर्ण-मिति नवपुष्पाणि, रक्तकरवीरमेकमेव वा, पुष्पवर्णा अक्षता अहतवस्त्रयुग्मानि च, कन्दरमयूरशिखा दृशाङ्गसर्जरसा विल्व-फलं श्रीवासं कृष्णागुरु जटामांसी मधुकमिति नवधूपाः, गुग्गुलुरेक एव वा, सर्पिषा दीपः तिलतैलेन वा, हविष्यान्नं पायसं पलान्नं गुडान्नं क्षीरोदनो दध्योदनः कृसरान्नमाषान्न-स्त्रिग्धान्नमिति नवोपहाराः, बिल्वदलमेकमेव वा, माणिक्यं मौक्तिकं प्रवालो मरकतं पुष्परागो वज्रो नीलो गोमेदिकं वैदूर्यं इति नवरत्नान्येकमेव वा माणिक्यं, अर्कः पालाशः खदिरोऽ-पामार्गोऽश्वत्थोदुम्बरः शमी दूर्वाः कुशा इति समिधः, सर्वेषां पालाश एक एव वा ॥ ३ ॥

अथार्चनमाचार्यः प्राङ्मुख उपविश्य समाहितः पुण्याहादि वाचयित्वा कर्म सङ्कल्प्य ग्रहवेदिपद्मपीठेषु यथास्थानमुखीं ग्रहप्रतिमां स्थापयित्वा दक्षिणवामयोरधिदेवताप्रत्यधिदेवते तदभिमुखी स्थापयेत् तदभावे पुष्पाक्षतादिष्वावाहयेदग्नि-रापः पृथिवी विष्णुरिन्द्र इन्द्राणी प्रजापतिः सर्पा ब्रह्मा च

क्रमेण ग्रहाणामधिदेवता:, ईश्वर उमा स्कन्द: पुरुषो ब्रह्मेन्द्रो यम: कालश्चित्रगुप्त इति प्रत्यधिदेवता:, गणपतिं दुर्गां चेत्राधिपतिं वायुमाकाशमश्विनौ कर्मसादृगुण्यदेवता इमा यथा प्रत्यक् निवेश्य प्राच्यादिष्विन्द्रादिलोकपालान् क्रतुरक्षिताना-वाहयेत् पुष्पाञ्जलिप्रयोगेणावाहनमन्त्रैर्नमोऽन्तैरावाह्य नाममि: क्रमेण दीपान्तानुपचारानर्पयेत् ॥ ४ ॥

अथावाहनमन्त्रा: प्रणवमुच्चार्य्य भगवन्नादित्य ग्रहाधिपते काश्यपगोत्र कलिङ्गदेशेश्वर जवापुष्पोपमाङ्गद्युते द्विभुज पद्माभयहस्त सिन्दूरवर्णाम्बरमाल्यानुलेपन ज्वलन्माणिक्यखचितसर्वाङ्गाभरण भास्कर तेजोनिधे त्रिलोकप्रकाशक त्रिदेवतामयमूर्ते नमस्ते सरक्तारुणध्वजपताकोपशोभितेन सप्ताश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन् आगच्छाग्निरुद्राभ्यां सह पद्मकर्णिकायां ताम्रप्रतिमां प्राङ्मुखीं वर्त्तुलपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि। भगवन् सोम द्विजाधिपते सुधामयशरीरात्रेयगोत्र यामुनदेशेश्वर गोक्षीरधवलाङ्गकान्ते द्विभुजगदावरदानाङ्कित शुक्लाम्बरमाल्यानुलेपनसर्वाङ्गमुक्तामौक्तिकाभरणरमणीयसर्वलोकाप्यायक देवतात्वायमूर्त्ते नमस्ते सरक्तपीतध्वजपताकोपशोभितेन दशश्वेताश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन् आगच्छाद्भिरुमया च सह पद्माग्नेयदलमध्ये स्फटिकप्रतिमां प्रत्यङ्मुखीं चतुरस्रपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि। भगवन् अङ्गारकाग्न्याकृते भारद्वाजगोत्रावान्तिदेशेश्वर ज्वालापुञ्जोपमाङ्गद्युते चतुर्भुज शक्तिशूलगदाखड्गधारिन् रक्ताम्बरमाल्यानुलेपन प्रवालाभरणभूषितसर्वाङ्ग दुर्धरालोकदीप्ते नमस्ते सरक्तध्वजपताकोपशोभितेन रक्तमेषरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ भूमिस्कन्दाभ्यां सह पद्मदक्षिणदलमध्ये रक्तचन्दनप्रतिमां दक्षिणामुखीं त्रिकोणपीठेऽधितिष्ठ

पूजार्थं त्वामावाहयामि। भगवन् सौम्य सौम्याकृते सर्वज्ञान-
मयात्रिगोत्र मगधदेशेश्वर कुङ्कुमवर्णाङ्गद्युते चतुर्भुज खड्गखेट-
कगदावरदानाङ्कित पीताम्बरमाल्यानुलेपन मरकताभरणा-
लङ्कृतसर्वाङ्ग विहङ्गमते नमस्ते सवत्सपीतध्वजपताकोपशोभि-
तेन चतुःसिंहरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ विष्णुपुरु-
षाभ्यां सह पद्मेशानदलमध्ये सुवर्णप्रतिमामुदङ्मुखीं बाणा-
कारपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि। भगवन् बृहस्पते
समस्तदेवताचार्याङ्गिरसगोत्र सिन्धुदेशेश्वर तप्तसुवर्णसदृशाङ्ग-
दीप्ते चतुर्भुज कमण्डल्वक्षसूत्रवरदानाङ्कित पीताम्बरमाल्या-
नुलेपन पुष्परागमयाभरणरमणीयसमस्तविद्याधिपते नमस्ते
सवत्सपीतध्वजपताकोपशोभितेन पीताश्वरथवाहनेन मेरुं
प्रदक्षिणीकुर्वन्नागच्छेन्द्रब्रह्माभ्यां सह पद्मोत्तरदलमध्ये सुवर्ण-
प्रतिमां उदङ्मुखीं दीर्घचतुरस्रपीठेऽधितिष्ठ पूजार्थं त्वामावा-
हयामि। भगवन् भार्गव समस्तदैत्यगुरो भार्गवगोत्र भोजकट-
देशेश्वर रजतोज्ज्वलाङ्गकान्ते चतुर्भुज दण्डकमण्डल्वक्षसूत्र-
वरदानाङ्कित शुक्लमाल्याम्बरानुलेपन वज्राभरणभूषितसर्वाङ्ग
समस्तनीतिशास्त्रनिपुणमते नमस्ते सवत्सशुक्लध्वजपताको-
पशोभितेन शुक्लाश्वरथवाहनसहितेन मेरुं प्रदक्षिणीकुर्वन्ना-
गच्छेन्द्राणीन्द्राभ्यां सह पद्मपूर्वदलमध्ये रजतप्रतिमां प्राङ्-
मुखीं पञ्चकोणपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि। भग-
वन् शनैश्चर भास्करतनय काश्यपगोत्र सुराष्ट्रदेशेश्वर कज्जल-
निभाङ्गकान्ते चतुर्भुज चापतूणीकृतबाणाभयाङ्कित नीला-
म्बरमाल्यानुलेपन नीलरत्नभूषणालङ्कृतसर्वाङ्ग समस्तभुवन-
भीषणामर्षमूर्त्ते नमस्ते सवत्सनीलध्वजपताकोपशोभितेन
नीलगृध्ररथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ प्रजापतिय-
माभ्यां सह पश्चिमदलमध्ये कालायसप्रतिमां प्रत्यङ्मुखीं चापा-

कारपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि। भगवन् राहो रविसोममर्दन सिंहिकानन्दन पैठीनसिगोत्र बर्बरदेशेश्वर कालमेघसमद्युते व्याघ्रवदन चतुर्भुज खड्गचर्मधर शूलवराङ्कित कृष्णाम्बरमाल्यानुलेपन गोमेदकाभरणभूषितसर्वाङ्ग सौख्यनिधे नमस्ते सवत्रकृष्णध्वजपताकोपशोभितेन कृष्णसिंहरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ सर्पकालाभ्यामग्नेर्नैऋतदलमध्ये सीसकप्रतिमां दक्षिणामुखीं शूर्पाकारपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि। भगवन् केतो कामरूप जैमिनिगोत्र मध्यदेशेश्वर धूम्रवर्णध्वजाकृते द्विभुज गदावरदाङ्कित चित्राम्बरमाल्यानुलेपन वैदुर्यमयाभरणभूषितसर्वाङ्ग चित्रगुप्ते नमस्ते सवत्रचित्रध्वजपताकोपशोभितेन चित्रकपोतवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ ब्रह्मचित्रगुप्ताभ्यां सह पश्चवायव्यदलमध्ये कांस्यप्रतिमां दक्षिणामुखीं ध्वजाकारपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि ॥ ५ ॥

अथ ग्रहाणामधिदेवताप्रत्यधिदेवतावाहनं, पिङ्गभ्रूश्मश्रुकेशं पिङ्गाक्षत्रिनयनमरुणवर्णाङ्गं छागस्थं साक्षसूत्रं सप्तार्चिषं शक्तिधरं वरदहस्तद्वयमादित्याधिदेवमग्निमावाहयामि, अथ प्रत्यधिदेवता त्रिलोचनोपेतं पञ्चवक्त्रं वृषारूढकपालशूलखड्गखट्वाङ्गधारिणं चन्द्रमौलिं सदाशिवमादित्यप्रत्यधिदेवं रुद्रमावाहयामि। स्त्रीरूपधारिणीः श्वेतवर्णाः मकरवाहनाः पाशकलशधारिणीः मुक्ताभरणभूषिताः सोमाधिदेवताः अपः आवाहयामि, अक्षसूत्रकमलदर्पणकमण्डलुधारिणीं त्रिदशपूजितां सोमप्रत्यधिदेवतामुमामावाहयामि। शुक्लवर्णान्दिव्याभरणभूषितां चतुर्भुजां सौम्यवपुषं चण्डांशुसदृशाम्बरां रत्नपात्रशस्यपात्रौषधिपात्रपद्मोपेतकरांश्चतुर्दिङ्नागभूषितां पृष्ठगतामङ्गारकाधिदेवतां भूमिमावाहयामि, षण्मुखं शिखण्ड-

कविभूषणं रक्ताम्बरमयूरवाहनं कुक्कुटघण्टापताकाशक्त्युपेतं चतुर्भुजमङ्गारकप्रत्यधिदेवतां स्कन्दमावाहयामि । कौमोदकी-पद्मशङ्खचक्रोपेतं चतुर्भुजं सौम्याधिदेवतां विष्णुमावाहयामि । सौम्यप्रत्यधिदेवतां विष्णुवत् पुरुषमावाहयामि, चतुर्दन्तगजा-रूढं वज्राङ्कुशधरं शचीपतिं नानाभरणभूषितं बृहस्पत्यधि-देवतामिन्द्रमावाहयामि, पद्मासनस्थं जटिलं चतुर्मुखं अक्ष-मालास्रुवपुस्तककमण्डलुधारिणं कृष्णाजिनवाससं पार्श्वस्थित-हंसं बृहस्पतिप्रत्यधिदेवं ब्रह्माणमावाहयामि । सन्तानमञ्जरी-वरदानवरद्विभुजां शुक्राधिदेवतामिन्द्राणीमावाहयामि, चतु-र्दन्तगजारूढं वज्राङ्कुशधरं शचीपतिं नानाभरणभूषितं भार्गवप्रत्यधिदेवतां शक्रमावाहयामि । यज्ञोपवीतिनं हंसस्थ-मेकवक्त्रं अक्षमालास्रुवपुस्तककमण्डलुसहितं चतुर्भुजं शनैश्च-राधिदेवं प्रजापतिमावाहयामि । ईषत्पीनं दण्डहस्तं रक्त-सदृशं पाशधरं कृष्णवर्णं महिषारूढं सर्वाभरणभूषितं शनैश्चर-प्रत्यधिदेवतं यममावाहयामि । ब्रह्मसूत्रधरान् कुण्डलाकार-पुच्छयुतानेकभोगान् स्त्रीभोगान् भीषणाकारान् राह्वधिदेव-तान् सर्पानावाहयामि । करालवदनं नित्यभीषणं पाशद-ण्डधरं सर्पहस्तिकरोमाणं राहुप्रत्यधिदेवं कालमावाहयामि । पद्मासनस्थं जटिलं चतुर्मुखं अक्षमालास्रुवपुस्तककमण्डलुधरं कृष्णाजिनवाससं पार्श्वस्थितहंसं केत्वधिदेवं ब्रह्माणमावाह-यामि । उदीच्यवेषधरं सौम्यदर्शनं लेखनीपत्रोपेतं द्विभुजं केतुप्रत्यधिदेवं चित्रगुप्तमावाहयामि ॥ ६ ॥

अथ साङ्गुण्यदेवतावाहनं वायुप्रदेशे सर्वत्र सप्रणवव्याहृ-तिपूर्वकं, विनैवं गजाननं नागयज्ञोपवीतिनं चन्द्रधरं दन्ता-क्षमालापरशुमोदकोपेतं चतुर्भुजं विनायकमावाहयामि । तत उत्तरत: शक्तिबाणशूलवज्रचक्रचन्द्रबिम्बखेटकपालपरशु-

खेटकोपेतदशभुजां सिंहारूढां दुर्गाख्यदैत्यासुरहारिणीं दुर्गा-मावाह्यामि । श्यामवर्णं त्रिलोचनम् ऊर्ध्वकेशं सुदंष्ट्रं भ्रुकु-टीकुटिलाननं नूपुरालङ्कृताङ्घ्रिं सर्पमेखलया युतं सर्पाङ्गमति-क्रुद्धं क्षुद्रघण्टावज्रगुल्फावलम्बिकरोटिकामालाधारिणम् चर-णकोपीनं चन्द्रमौलिं दक्षिणहस्तैः शूलवेतालखड्गदुन्दुभिं दधानं वामहस्तैः कपालघण्टाचर्मचापं दधानं भीमं दिग्वास-समसितद्युतिं क्षेत्रपालमावाह्यामि । धावद्धरिणपृष्ठगतं ध्वजवरदानधारिणं धूम्रवर्णं वायुमावाह्यामि । नीलोत्प-लाभं नीलाम्बरधारिणं चन्द्रार्कोपेतं द्विभुजं खेटमाकाशमा-वाह्यामि । प्रत्येकमौषधिपुस्तकोपेतदक्षिणवामहस्तावन्यो-न्यसंयुक्तदेहावेकस्य दक्षिणपार्श्वे परस्य वामपार्श्वे रक्तभाण्ड-वरमुक्ताम्बरधारिनारीयुग्मोपेतौ देवौ भिषजावश्विनावावाह-यामि । अथ क्रतुसंरक्षकेन्द्रादिलोकपालावाहनं, स्वर्णवर्णं सहस्राक्षम् ऐरावतवाहनं वज्रपाणिं शचीप्रियमिन्द्रम् आवा-ह्यामि । अरुणवर्णं त्रिनेत्रं साक्षसूत्रं समार्चिषं शक्तिधरं वरदहस्तद्वययुक्तम् अग्निम् आवाह्यामि । रक्तवर्णं दण्डधरं पाशहस्तं महिषवाहनं स्वाहाप्रियं यममावाह्यामि । नील-वर्णं खड्गचर्मधरम् ऊर्ध्वकेशं नरवाहनं कालिकाप्रियं निर्ऋ-तिमावाह्यामि । रक्तभूषणं-नागपाशधरं मकरवाहनं पद्मि-नीप्रियं सुवर्णवर्णं वरुणमावाह्यामि । स्वर्णवर्णं निधीश्वरं कुन्तपाणिमश्ववाहनं चित्रिणीप्रियं कुबेरमावाह्यामि । शुद्ध-स्फटिकवर्णं वरदाभयशूलाक्षसूत्रधरं वृषवाहनं गौरीप्रिय-मीशानमावाह्यामि, इति पूर्ववत् पूजयेत् ॥ ७ ॥

अथाग्निमुपसमाधाय अन्वाधानाद्याज्यभागान्तं कृत्वा मधुसिक्ताभिः समिच्चर्वाज्यानि प्रत्येकं शतैकावराभिः सह-स्रपराभिराहुतिभिर्निमित्तमत्यपेक्षया जुहुयात्प्रधानद्रव्येण

पार्श्वदेवतयोस्तद्दैवतेतरेषां स्वाहान्तैर्नामभिर्होमस्तत्तल्लिङ्ग-
मन्त्रैर्वा सकृदवदानेन चरुहोमः पाणिना प्रभूतांस्तिलांश्च
व्याहृतिभिर्हुत्वा प्राक् स्विष्टकृतो ग्रहाणां घण्टादिशब्दैरुप-
चारानुपकल्प्य सपुष्पाणि रत्नानि निवेदयेदभावे सुवर्णपुष्पाणि
वा, तान् नमस्कृत्य प्रसीदन्तु भवन्त इति प्रसाद्य होमं समा-
पयेत्। यदि मन्त्रैरिष्टस्तदैते मन्त्रा भवन्त्याकृष्णेन रजसा वर्त्त-
मानः, आप्यायस्व समेतु ते, अग्निर्मूर्द्धा दिवः ककुत्, उद्बुध्यध्वं
समनसः सखायः, बृहस्पते अतियदर्य्यः अर्हात्, शुक्रन्ते अन्य-
द्यजतन्ते अन्यत्, शमग्निरग्निभिः करत्, कयानश्चित्र आभु-
वत्, केतुं कृण्वन्नकेतव इति ग्रहाणाम्, अग्निं दूतं वृणी-
महेऽप्सु मे सोमो अब्रवीत्स्योना पृथिवी भवेदं विष्णुर्विचक्रम
इन्द्रश्रेष्ठानि द्रविणानि धेहीन्द्राणीमासु नारीषु प्रजापतेन
त्वदेतान्य आयङ्गौः पृश्निरक्रमीद् ब्रह्म यज्ञानां प्रथमं पुर-
स्तादित्यधिदेवतानां, त्र्यम्बकं यजामहे गौरीर्मिमाय सलि-
लानि तक्षती कुमारश्चित्पितरं वन्दमानं सहस्रशीर्षा पुरुषो
ब्रह्मणा ते ब्रह्मयुजा युनज्मि इन्द्रमिद्देवतातये यमाय सोमं
सुनुत परं मृत्यो अनुपरेहि पन्थां सचित्रचित्रं चितयन्तमस्मे
इति प्रत्यधिदेवतानाम्, आतून इन्द्रक्षुमन्तं जातवेदसे सुन-
वाम सोमं क्षेत्रस्य पतिना वयं काणाभिप्र्यमर्हीनामादित्प्रत्नस्य
रेतसोऽश्विनावर्त्तिरस्मदेतीत्यो तस्माद्ध्रुवदेवतानाम्, इन्द्रं वो
विश्वतस्पर्य्यग्निमीळे पुरोहितं यमाय सोमं सुनुत तद्वाविसौषुणः
परापरो कुत्तमं सुसुग्धितस्तववायमहतस्पते त्वं नः सोम विश्वतः
कद्रुद्राय प्रचेतस इति लोकपालानाम् ॥ ८ ॥

अथ यजमानाभिषेको ग्रहवेदे प्रागुदीच्यां शुचौ देशे संस्क-
ष्टालङ्कृते प्राक्प्रवणे चतुष्पादन्दीर्घं चतुरस्रं सोत्तरच्छदं पीठं
विधाय तत्रोदगग्रान् समूलान् हरितदर्भानास्तीर्य प्राङ्मुखं

कर्त्तारं सामात्यमुपवेश्याचार्य्यः सहर्त्विग्भिः अभिषेककुम्भमादाय प्रत्यङ्मुखस्तिष्ठन्नोड्म्बर्य्यार्द्रया शाखया सपलाशया हिरण्यपवित्रया सकुशदूर्वयान्तर्धाय कुम्भोदकपृषद्भिरभिषिञ्चेत् अपलिङ्गाभिर्वारुणीभिः पावमानीभिः अन्याभिश्च शान्तिपवित्रलिङ्गाभिर्ग्रहाभिषेकमन्त्रैः समुद्रज्येष्ठा इति सूक्तेन सुरास्त्वामिति सूक्तेन च श्रीसूक्तेनेमा आपः शिवतमा इत्यृचेन देवस्य त्वेति च यजुषा भूर्भुवः स्वरिति च व्याहृतिभिरभिषिक्तस्तेभ्यो ग्रहोक्तां दक्षिणां दद्यात्ता गौः शङ्खो रक्तोऽनड्वान् हिरण्यं पीतं वासः श्वेताश्वः कृष्णा गौः कार्ष्णायसं हस्ती छागो वेति हीनां पुनर्हिरण्येन संमितां कुर्य्यात् अभावे सर्वेषां हिरण्यमेव वा तुष्टिकरं दद्यात् द्विगुणमाचार्य्याय अत्र घृतान्नेन ब्राह्मणान् भोजयित्वा शान्तिः पुष्टिस्तुष्टिश्चास्त्विति वाचयेत् सम्बन्धिज्ञातिबान्धवांश्च तोषयेदेष ग्रहयज्ञः सर्वानिष्टशमनः सर्वपुष्टिकरः सर्वाभीष्टकरः तस्मादेनं विभववान् विशेषतः कुर्य्यात् अविभवः शान्तिपुष्टिकामो यथोपपत्ति कुर्य्यात् ॥ ८ ॥

अथ होमोऽहरहर्वैश्वदेवयज्ञो गृहस्थो ह्यहरहरिष्टान्देवानिष्ट्वाभीष्टार्थांश्चिनोति तस्य तेऽहरहर्वैश्वास्ते गणपतिर्वा स्कन्दो वा सूर्य्यो वा सरस्वती वा गौरी वा गौरीपतिर्वा श्रीपतिर्वा श्रीर्वान्योवायोभिमतस्स एव यथारुचि समस्तावेज्यन्ते, केचिद्गणपतिमादित्यं शक्तिमच्युतं शिवं पञ्चकमेव वाहरहर्यजन्ते, तानप्सु वाग्नौ वा सूर्य्ये वा स्वहृदये वा स्थण्डिले वा प्रतिमासु वा यजेत प्रतिमास्वर्चणिकासु नावाहनविसर्जने भवतः, स्वाकृतिषु हि शस्तासु देवता नित्यं सन्निहिता इत्यस्थिरायां विकल्पः स्थण्डिले तूभयं भवतु, प्रतिमां प्राङ्मुखीं उदङ्मुखो यजेतान्यत्र प्राङ्मुखः सम्भृतसम्भारः यजनभवनमेत्य द्वारदेशे

स्थित्वा इस्ततालत्रयेणापसर्पन्तु ये भूता ये भूता भुवि संस्थिताः। ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥ इति विघ्नानुद्दाश्य प्रविश्य येभ्यो माताम धुमत्यन्विते पय एवापित्रे विश्वदेवायदृष्ण इति जपित्वा शुचावासने उपविश्य पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वञ्च धारय मान्देवि पवित्रं कुरु चासनम् ॥ इत्युपविश्याचम्यायतप्राणः सङ्कल्प्य शुचिशङ्खादिपात्रमद्भिः प्रणवेन पूरयित्वा गन्धाक्षतपुष्पाणि प्रक्षिप्य सावित्र्याभिमन्त्र्य तीर्थान्यावाह्याभ्यर्च्य पवित्रपुष्पाणि तदुदकेनापोहिष्ठीयाभिरात्मानमायतनं यजनाङ्गानि चाभ्युक्ष्य क्रियाङ्गोदककुम्भङ्गन्धादिभिरभ्यर्च्य तेनोदकेनार्घ्यान् कुर्वीत नमोऽन्तनाम्ना तल्लिङ्गमन्त्रेण वा क्रमेणोपचारान्दद्यात् पुष्पोदकेन पाद्यमर्घ्यञ्च पात्रान्तरेण सगन्धाक्षतकुसुमान्दद्यादावाहनमासनं पाद्यमर्घ्यमाचमनीयं स्नानमाचमनं वस्त्रमाचमनमुपवीतमाचमनं गन्धपुष्पाणि धूपन्दीपं नैवेद्यं पानार्थं जलमुत्तरमाचमनीयं मुखवासं स्तोत्रं प्रणामं दक्षिणां विसर्जनञ्च कुर्य्यात्, असम्पन्नो मनसा सम्पादयेदाचमनञ्च पृथगुपचारः प्रणामस्तोत्राङ्गं दक्षिणादिविसर्जनाङ्गम्। पथ मन्त्राः गणानां त्वा गणपतिं हवामहे इति गणपतेः कुमारश्चित्पितरं वन्दमानमिति स्कन्दस्य आकृष्णेन रजसा वर्त्तमान इत्यादित्यस्य पावकानः सरस्वतीति सरस्वत्याः जातवेदसे सुनुवामसोममिति शक्तेः त्र्यम्बकं यजामहे इति रुद्रस्य गन्धद्वारामिति श्रियः इदं विष्णुर्विचक्रम इति विष्णोरेवं षोड़शेमानुपचारान् पौरुषेणैव सूक्तेन प्रत्यृचं सर्वेव प्रयुञ्जन्तेऽन्ये सावित्र्या वा जातवेदस्यया वा प्राजापत्या व्याहृत्या वा प्रणवेनैव वा कुर्वन्ति, स एष देवयज्ञोऽहरहर्गोदानसंमितः सर्वाभीष्टप्रदः स्वर्ग्योऽपवर्ग्यश्च तस्मादेवमहरहः कुर्वीत तमेनं वैश्वदेवं हुतशेषेण

पृथगन्नेन वा कुर्यान्नास्य शेषेण वैश्वदेवं कुर्यात्। अथास्य शेषेण गृहदेवतानां बलिर्द्वारे पितामहाय प्रक्रोडे रुद्राय अथ गृहे प्राच्यान्दिशि प्रतिदिशं सनवग्रहायेन्द्राय वज्रभृते यमविष्णुभ्यां स्कन्दवरुणाभ्यां सोमसूर्याभ्यामश्विभ्यां वसुभ्यो नक्षत्रेभ्योऽथ मध्ये वास्तोष्पतये ब्रह्मणेऽथ प्रागादिभित्तिमूलेषु सिद्धेश्च दृष्टेश्च श्रियै कीर्त्यै वरुणायोदधानेऽश्विभ्यां दृषदुपलयोः द्यावापृथिवीभ्यामुलूखलमुसलयोरथ निष्क्रम्य भूमावप आसिच्य श्वचाण्डालपतितवायसेभ्योऽन्नं भूमौ विकिरेत् ये भूताः प्रचरन्ति दिवा बलिमिच्छन्तो विदुरस्य प्रेष्याः तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिः ददात्विति रात्रौ चेन्नक्तं वा बलिमिति ब्रूयादथ प्रक्षालितपादपाणिराचम्य गृहं प्रविशेत्, शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्युभयन्नो अस्तु शिवा दिशः प्रदिश उद्दिशो न आपो विद्युतः परिपान्तु विश्वत इति जपित्वा अन्यानि च स्वस्त्ययनानि ततोमनुष्ययज्ञपूर्वकं भुञ्जीत ॥ १० ॥

अथ भोजनविधिरार्द्रपादपाणिराचान्तः शुचौ देशे प्राङ्मुखः प्रत्यङ्मुखो वोपविश्य भस्मना वारिणा वा हस्तमात्रे चतुरस्रमण्डले पात्रस्थमन्नं प्रणवव्याहृतिपूर्वया सावित्र्याभ्युक्ष्य स्वादो पितो मधो पितो इत्यभिमन्त्र्य सत्यं त्वर्त्तेन परिषिञ्चामीति दिवा परिषिञ्चेदृतन्त्वा सत्येन परिषिञ्चामीति रात्रावथ दक्षिणतो भुवि भूपतये भुवनपतये भूतानां पतये इति नमोऽन्तैः प्राक्संस्थं प्रत्यक्संस्थं वा बलिं विकीर्य हस्तं प्रक्षाल्य समाहितोऽमृतोपस्तरणमसीत्यपः प्राश्य सव्येन पाणिना पात्रमालभ्य तर्जनीमध्यमाङ्गुष्ठैः प्राणाय मध्यमानामिकाङ्गुष्ठैरपानाय कनिष्ठिकानामिकाङ्गुष्ठैर्व्यानाय कनिष्ठिकातर्जन्यङ्गुष्ठैरुदानाय सर्वाङ्गुलीभिः समानाय च मुखे जुहु-

याञ्चर्वाभिरेव वा सर्वेभ्यो जुहुयादेवं वाग्यतो भुक्त्वा अमृतापिधानमसीत्यपिधानं प्राश्य शोधितमुखपादपाणिर्द्विराचामेदेवं भुञ्जानोऽग्निहोत्रफलमश्नुते बलपुष्टिमान् भवति सर्वमायुरेति ॥ ११ ॥

अथास्तमिते सायंसन्ध्यामुक्तवदुपास्य होमवैश्वदेवरुद्रबल्यातिथ्यार्चनानि कृत्वा यदि दिवोदितकर्माण्यकृतानि यावत् प्रहरं यामिन्यास्तावत् क्रमेण सर्वाणि सौरं वर्जयित्वा कुर्याद्दाक्षिणेयस्यैवार्घ्यं दद्यादिति विशेषोऽष्टमीं चतुर्दशीं भानुवारं श्राद्धदिनं तत्पूर्वदिनञ्च वर्जयित्वावशिष्टरात्रिषु नियमेनामात्यैः परिवृतो लघु भोजनं कृत्वा पत्न्या सह ताम्बूलादिसेवनं कृत्वा सन्ध्यायां शून्यालये श्मशाने चैकवृक्षे चतुष्पथे शिवमातृकायतनागस्कन्दभैरवाद्युग्रदेवरहितेषु धान्यगोदेवविप्राग्निरूपाणामुपरि वा शुचौ देशे शुचिरार्द्रवस्त्रपादो न नग्नः शयनं कुर्यात् रात्रीति व्यख्यदायतीति सूक्तं जपित्वा प्राक्शिरो दक्षिणतः शिरो वेष्टयित्वा देवतां नत्वा स्मरणं च कृत्वा वैणवदण्डमुदकपात्रं च शयनसमीपे निधाय प्रक्षालितपादः शयनं कुर्यात् प्रदोषपरयामौ निद्रयातिक्रम्याथ प्रभाते इष्टदेवतां मनसा नत्वा तदहःकृत्यं स्मृत्वा धर्मशास्त्रोक्तविधिना मूत्रपुरीषोत्सर्गादि कुर्य्यात् ॥ १२ ॥

अथ श्राद्धानि तान्यष्टौ पूर्वेद्युः पार्वणं अष्टम्यन्वष्टक्यं मासि मासि काम्यं आभ्युदयिकमेकोद्दिष्टं पार्वणं चेति पर्वामावास्या तत्र भवं पार्वणं तदाहिताग्निः पिण्डपितृयज्ञं कृत्वा करोत्यनाहिताग्निस्तु तदितरेण व्यतिषज्यते यथादौ पिण्डपितृयज्ञो यावदग्न्याधानादथ पार्वणं ब्राह्मणप्रक्षौचाद्याच्छादनान्तं पुनः पितृयज्ञ आमेक्षणानुप्रहरणात् पुनः पार्वणमातृतिप्रश्नादथो-भयशेषं क्रमेण समापयेदित्येष व्यतिषङ्गस्तमिममुदाहरिष्यामः

पितृयज्ञेऽपराह्णेऽग्निमुपसमाधाय तस्यैकमुल्मुकं प्राक्
दक्षिणा प्रणयेद्ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया
चरन्ति परा पुरो निपुरो ये भरन्त्यग्निष्टाल्लोकात् प्रणुदात्व-
स्मादिति सोऽग्निरतिप्रणीतो भवति तच्चोपसमाधायोभौ प्राक्
दक्षिणाग्रैः दर्भैः परिस्तृणीयात्सर्वकर्मणीह प्राग्दक्षिणाङ्ग-
मयेदथौपासनाग्नेः प्रागुदक् प्रत्यग्वा प्राग्दक्षिणाग्रान्दर्भाना-
स्तीर्यैकैकशः पात्राणि प्रयुनक्ति चरुस्थालीं शूर्पं स्फ्यमुलू-
खलं मुसलं स्रुवं स्रुचं कृष्णाजिनं सकृदाच्छिन्नमिध्मं मेक्षणं
कमण्डलुमिति दक्षिणतो व्रीहिशकटं भवति शूर्पं स्थालीं
प्रगृह्य दक्षिणतः शकटमारुह्य स्थालीं व्रीहिभिः पूरयित्वा
शूर्पे निसृज्य शूर्पपतितान् शकटे प्रास्य स्थालीस्थान् कृष्णा-
जिन उलूखलं कृत्वा पत्न्यवहन्त्यादविवेचमवहतान् सकृत्
प्रक्षाल्यौपासने श्रपयेदवागतिप्रणीतात् स्फ्येन प्राग्दक्षिणा-
यतां लेखामपहता असुरा रक्षांसि वेदिषद इत्युल्लिख्य ताम-
भ्युक्ष्य सकृदाच्छिन्नेन बर्हिषाऽवस्तीर्य्य त्रिलीनानुत्पूतमाज्यं
दक्षिणतो निधाय स्रुवेण स्थालीपाकमभिघार्य्योदगुद्वास्य प्रत्य-
गतिप्रणीतादासाद्य दक्षिणतोऽभ्यञ्जनाञ्जनकशिपूपबर्हणानि
चैतदन्तं पिण्डपितृयज्ञं कृत्वा पार्वणमारभेत् ॥ १२ ॥

अथ हविरर्हान् ब्राह्मणान् दैवे द्वौ त्रीन् पित्र्ये एकैकं
वोभयत्र शक्तावेकस्यानेकान् वा काले निमन्त्रितान् स्वागते-
नाभिपूज्य प्राच्यां शुचौ गृहाजिरे गोमयाम्भसा चतुरस्रमुत्तरं
वर्तुलं दक्षिणे मण्डलद्वयमुल्लिख्य प्रागग्रान् दर्भान् सयवानु-
त्तरेऽस्य दक्षिणाग्रान् सतिलानितरत्रोभे अभ्यर्च्य ब्राह्मणा-
ययोर्हस्तं यथावयः पित्र्ये ज्यायांसो दैवे कनीयांसः उभयत्र
दक्षिणेन विनियुज्याथ प्रत्यङ्मुख उत्तरे मण्डले दैवनियुक्त-
योर्यवाम्भसा पाद्यं दत्त्वा मन्त्रेण प्रक्षाल्य पादान् प्रक्षाल्य

दक्षिणे चेतरेषां प्राचीनावीती तिलाम्भसा पाद्यं दत्त्वा तथैव क्षालयेत् अथ तानुदक् शिराचान्तातुदिष्टरूपान् ध्यायन् परिश्रिते दक्षिणप्रवणे उपलिप्ते गृहे दैवे प्राङ्मुखावुदगपवर्गं दक्षिणतः पित्र्ये उदङ्मुखान् प्रागपवर्गानुपवेश्याचान्तो यज्ञोपवीती प्राणानायम्य कर्म सङ्कल्प्य दैवे सर्वमुपचारमुदङ्मुखो यज्ञोपवीती प्रदक्षिणं कुर्यात्पित्र्ये प्राक् दक्षिणामुखः प्राचीनावीती प्रसव्यमथ तिलहस्तः अपहता असुरा रक्षांसि पिशाचा ये क्षयन्ति पृथिवीमनु अन्यत्रेतो गच्छन्तु यत्रैतेषाङ्गतं मन इति सर्वतस्तिलैरवकीर्य्योदीरतामवर उत्पराम इति जपित्वा दर्भाम्भसावान्यभ्युक्ष्य गयायां जनार्दनं वस्वादिरूपान् पितृंश्च ध्यात्वाऽथ प्रथमं दैवे ब्राह्मणहस्तयोरपो दत्त्वा युग्मान् ऋजून् प्रागग्रान् दर्भान् विश्वेषां देवानामिदमासनमिति एकैकस्थाने दक्षिणतः प्रदायापो दद्यादेवं सर्वोपचारेष्वाद्यन्तयोरापो दद्यादथाभ्युक्षितायाम्भुवि प्रागग्रान्दर्भानास्तीर्य्य तेषु न्यग्विलं पात्रं आसाद्योत्तानयित्वा तस्मिन् प्रागग्रे दर्भयुग्मान्तर्हिते अप आसिच्य यवोऽसीत्या अनुमन्त्र्य यवोऽसि धान्यराजो वा वारुणो मधुसंयुतः। निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम्॥ इति यावानोप्य गन्धादीनि च क्षिप्त्वा देवपात्रं सम्पन्नमित्यभिमृश्य यवहस्तो विश्वान्देवानावाहयिष्यामीत्युक्त्वा ताभ्यामावाहयेत्युक्ते विश्वे देवा स आगतेति पादादिमूर्द्धान्तं सव्यसंस्थितयोः यवानवकीर्य्यागच्छन्तु महाभागा विश्वे देवा महाबलाः। ये अत्र विहिता श्राद्धे सावधाना भवन्तु ते॥ इत्युपस्थाय स्वाहार्घ्या इत्यर्घ्यमुभयोः सकृन्निवेद्याथ प्रत्येकं प्रथममन्या आपो दत्त्वार्घ्यादर्घ्यमादायेदं वो अर्घ्यमिति दत्त्वा या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्या हिरण्यवर्णा यज्ञिया-

स्तान आपः शिवा शंस्योना भवन्त्वित्यनुमन्त्रैवं द्वितीयस्यापि शेषं दत्त्वाऽनुमन्त्र्य गन्धपुष्पधूपदीपान् उभयोर्हि दत्त्वाच्छादनं दद्यात् यथार्चनविधेः सम्पूर्णतां वाचयित्वा पित्रर्चनायामनुज्ञातः प्राचीनावीती प्राक् दक्षिणाभिमुखः पित्रर्चनं कुर्यात् ॥ १४ ॥

पिता पितामहः प्रपितामह इति त्रयस्तेषां प्रत्येकमेकं द्वौ बहुवद्वा निर्देशं कुर्य्यादपो दत्त्वा दर्भान्द्विगुणभुग्नानयुग्मान्दक्षिणाग्रान् गोत्रनामरूपाणां पितॄणामिदमासनमित्येवमासनेषु सव्यतो दद्यादुत्तमपादानमथ भुवमभ्युक्ष्य दक्षिणाग्रान् दर्भानास्तीर्य्य त्रीणि तैजसाश्ममयमृण्मयानि पात्राण्यभावे एकद्रव्याणि वा न्यक्विलानि प्राग्दक्षिणापवर्गन्निधायोत्तानानि कृत्वा तेषु तेष्वयुग्मदर्भान्तर्हितेष्वप आसिच्य त्रीण्यपि सकृच्छन्नो देवीरनुमन्त्र्य तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः प्रत्नवद्भिः प्रत्त स्वधया पितॄनिमां लोकान् प्रीणयाहि नः स्वधा नम इति पृथक् त्रिषु तिलानोप्य गन्धादीन् क्षिप्त्वा पितृपात्रं सम्पन्नमित्येवं तान्नि यथालिङ्गमभिमृश्य तिलहस्तो यथालिङ्गं पितॄन् पितामहान् प्रपितामहान् आवाहयिष्यामीत्युक्त्वा तैरावाहयेत्युक्तो मूर्द्धादिपादान्तं दक्षिणाङ्गसंस्थमेकैकस्मिन् उशन्तस्त्वा निधीमहीति तिलानवकीर्य्य आयान्तु नः पितरः सोम्यास इत्युपस्थायाथोपवीती स्वधार्घ्या इति पूर्वमर्घ्यं निवेद्यान्यापो दत्त्वा सशेषमर्घ्यमादाय दक्षिणेन पाणिना सव्योपगृहीते पितरिदन्ते अर्घ्यं पितामहेदन्ते अर्घ्यं प्रपितामहेदन्ते अर्घ्यमिति पितृतीर्थेन दत्त्वा प्रत्येकं या दिव्या आप इत्यनुमन्त्रयेतोभयतः एकैकत्राग्रणपक्षे देवे सर्वमर्घ्यमेकस्मै दद्यात् पित्र्ये त्रीण्यपि पात्राण्येकस्मै निवेद्य पुनरन्यान्स्नानपूर्वं त्रीण्यपि तस्मा एव दद्यादथैकस्मै ब्राह्मणे-

कपश्चो यावन्त एकैकस्य तेभ्यस्तेभ्य एकैकं तत्पात्रं सकवि-वेद्याद्यमेकैकं तावद्वा विरच्य दद्यात् न तु प्रत्येकं पात्राणि कुर्य्यादथेतराघ्यं शेषानाद्यपात्राघ्यं शेषे च निनीय ताभिरद्भिः पुत्रकामो मुखमनक्ति तत्पात्रं शुचौ पितृभ्यः स्थानमसीति निधाय पितामहाद्यं पात्रे वा निदध्यात् न्युब्जं वा तत् कुर्य्या-दथ प्राचीनावीती गन्धाद्याच्छादनान्तं दत्त्वार्चनविधेः सम्पूर्णतां वाचयेदेवमेतत् पार्वणस्य कृत्वा पुनरनन्तरं पिण्डपितृ-यज्ञं कुर्य्यात्॥ १५॥

अथ स्थालीपाकादन्नमुद्धृत्य घृतेनाक्ताऽग्नौ करिष्यामीति पृष्ट्वा क्रियतामित्युक्तेऽतिप्रणीतेऽग्नाविध्ममुपसमाधाय मेक्ष-णेनादायावदानसम्पदा जुहुयात्सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति स्वाहाकारेण वा पूर्व-मन्त्रं यज्ञोपवीती मेक्षणमनुप्रहरेदित्येतावत् पिण्डपितृयज्ञ-स्याथ पुनः पार्वणस्य भोजनार्थयेषु दैवे चतुरस्रे मण्डले पित्र्ये वृत्तानि गोमयेनोपलिप्य सयवान् सतिलांश्च दर्भान् प्रास्य तेषु दैवे सौवर्णं पित्र्ये राजतानि अभावे तदवस्थानि तैज-सानि वा पात्राणि निधायाज्येनोपस्तीर्य्यान्नानि परिविष्य पितृपात्रेषु हुतशेषं दत्त्वा दर्भैः पात्राण्युपर्यधश्चाभिरच्छाद्य दैवेऽन्नं सावित्र्याभ्युक्ष्य तूष्णीं परिषिच्य पृथिवी ते पात्रं द्यौर-पिधानं ब्राह्मणस्त्वा मुखेऽमृतं जुहोमि ब्राह्मणानां त्वावि-द्यावतां प्राणापानयोर्जुहोम्यक्षतमसि मामेक्षेष्ठा अमुत्रामु-ष्मिन् लोके इत्यभिमन्त्र्य इदं विष्णुर्विचक्रम इति ब्राह्मणपा-ण्यङ्गुष्ठं विष्णो हव्यं रक्षस्वेति निवेश्य यवोदकमादाय विश्वे देवा देवता इदमन्नं हविरयं ब्राह्मण आहवनीयार्थे इयं भूमिर्गयायां भोक्ता गदाधर इदमन्नं ब्रह्मणे दत्तं सौवर्णपात्र-स्थमक्षय्यवटच्छायेयम् इत्युक्त्वा विश्वेभ्यो देवेभ्य इदमन्नमस्तु-

तद्रूपं परिशिष्टं परिवेक्ष्यमाणश्चाक्षसे: स्वाहेत्यनुसृज्यैवं द्विती-
येऽपि दत्त्वा ये देवासो दिव्येकादशस्थेत्यनुपस्थायाथ पित्र्य
प्राचीनावीती राजते स्वधाशब्दविशेषणेन यथालिङ्गमुद्दिश्य
ये चेह पितर इत्युपस्थायाथोपवीतान्नेषु मधुसर्पिर्वासिच्य
सप्रणवव्याहृतिं सावित्रीं मधुमतीश्च जपित्वा मध्विति च
त्रिरुक्त्वा पितॄननुस्मृत्यापोशनं प्रदाय ब्राह्मणान् यथासुखं
जुषध्वमिति भोजनायातिसृजेत् भुञ्जानान् वैश्वदेवरक्षोघ्नपि-
त्र्यादीनि च श्रावयेदथ तृप्तान् ज्ञात्वा मधुमतीरक्षन्नमीमद-
न्तेति च श्रावयित्वा सम्पन्नं पृष्ट्वा सुसम्पन्नमित्युक्ते भुक्तशे-
षात्सावर्णिकमन्नं पिण्डार्थं विकिरार्थञ्च पृथगुद्धृत्य शेषं
निवेद्यानुमते गण्डूषं दत्त्वा तेष्वाचान्तेष्वनाचान्तेषु वा
तदन्नशेषेण पिण्डान्निपृणीयाद्यद्यनाचान्तेषु निपृणीयादाचा-
न्तानन्वन्नं प्रकिरेदथाचान्तेषु निपरणमनुप्रकिरेन्न तु पूर्वं नि-
परणात् प्रकिरेत् ॥ १६ ॥

अथ पिण्डार्थमुद्धृतमन्नं स्थालीपाकेन सम्मिश्र्य प्राचीना-
वीती सकृदाच्छिन्नास्तृतायां लेखायां त्रिषु पिण्डदेशेषु प्राक्
दक्षिणापवर्गं शुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां
प्रपितामहा इति पितृतीर्थेन तिलाम्बु निनीय तेषु पिण्डान्
पित्रादिभ्यः एतत्ते विष्णो ये च त्वामत्रानु तेभ्यश्चेति पराची-
नेन पाणिना यथालिङ्गं दत्त्वा तान् अत्र पितरो मादयध्वं
यथाभागमावृषायध्वमिति सकृदनुमन्त्र्य सव्यावृदावृत्योदङ्-
मुखो यथाशक्त्या यतप्राणः प्रत्यावृत्यामी मदन्त पितरो यथा-
भागमावृषायीषतेति पुनरभिमन्त्र्य च तच्छेषमाघ्राय पूर्ववत्
पुनस्तिलाम्बु पिण्डं तेषु निनीयासावभ्यंक्ष्वासावभ्यंक्ष्वेति यथा-
लिङ्गं पिण्डेष्वभ्यञ्जनाञ्जने दत्त्वा वासो दद्याद्दशामूर्णास्तुकां वा
वयस्यपरे स्वहलोमैतद्वः पितरो वासो मा नो तोऽन्यत्पितरो

युगध्वमित्यथैतानां गन्धादिभिरर्चयित्वा प्राञ्जलिर्नमो वः पितर इषे नमो वः पितर ऊर्जे नमो वः पितरः शुष्माय नमो वः पितरो घोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितर इमा अस्माकं जीवा वो जीवन्त इह सन्तस्यामेति मनोऽन्वा हुवामह इति तिसृभिरुपस्थायाथ पिण्डस्थान् पितॄन् प्रवाहयेत् परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः। दत्त्वा यास्मभ्यं द्रविणेह भद्रं रयिञ्च नः सर्ववीरं नियच्छतेत्यग्ने तमद्येत्यौपासनाग्निं प्रत्येत्य यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम। अग्निर्मा तस्मादेनसः प्रमुञ्चतु करोतु मामनेन समिति जपित्वाऽथ पिण्डानवमृत्य मध्यमं पिण्डं वीरं मे दत्त पितर इत्यादायाधत्त पितरो गर्भं कुमारं पुष्करस्रजं यथायमरपा असदिति पुत्रकामः पत्नीं प्राशयेन्नेतदशुभश्राद्धेषु कुर्यादक्षितरावति प्रणीतेऽग्नौ वा जुहुयात् गवे वा ब्राह्मणाय वा दद्यात् अथ यज्ञप्रस्तराणि द्विवहृत्सृजेत् उदकेन तर्पणं द्वितीयं कुर्यात् एवं पिण्डपितृयज्ञं समाप्याथ श्राद्धशेषं समापयेत्॥ १७॥

अथ ब्राह्मणानाचमय्य यत्सार्ववर्णिकं पृथगुद्धृतं तत्प्रकिरान्नमम्भसा परिस्राव्योच्छिष्टान्ते दर्भान् दक्षिणाग्रान् प्रकीर्य तेषु ये अग्निदग्धा ये अनग्निदग्धा इति तदन्नं प्रकीर्य येऽग्निदग्धाः कुले जाता येऽप्यदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्॥ इति तिलाम्बु च निनीयाचमेदथ ब्राह्मणहस्तेष्वपो दर्भांश्च दद्यात् यवांस्तिलांश्चावधाय पुनरपो दद्यादेषा हस्तशुद्धिरथ ब्राह्मणानभिवाद्योपवीत्यादस्मद्गोत्रं वर्धतामिति गोत्रवृद्धिं वाचयित्वा पात्राणि चालयित्वा देवान् पितॄंश्च यथालिङ्गमामन्त्र्य स्वस्तीति ब्रूतेत्यपो दद्यात् अथ दैवे

दत्तं श्राद्धं देवानामक्षय्यमस्त्विति ब्रूतेति पृथक् यवाम्बु दत्त्वा
पित्र्ये प्राचीनावीतिदत्तं श्राद्धं च पितॄणामक्षय्यमस्त्विति ब्रूतेति
यथालिङ्गन्तिलाम्बु दत्त्वा न्युब्जं पात्रं विहृत्योपवीती ब्राह्म-
णेभ्यो मुखवासताम्बूलादि दक्षिणाञ्च दत्त्वा तान्पादाभ्यङ्गा-
दिभिः प्रियोक्तिभिश्च परितोष्य कर्म सम्पूर्णतां वाचयित्वा ॐ
स्वधोच्यतामिति चास्तु स्वधेति चोक्ता पितृपूर्वं विसर्जयेत्
तथा ॐ स्वधेति वास्तु स्वधेति वा ब्रुवन्त उत्तिष्ठन्तु विश्वे देवाः
प्रीयन्तामिति देवब्राह्मणौ विसृजेत् प्रीयन्तां विश्वे देवा इति
ताभ्यामुक्ते पिण्डनिपरणदेशं सम्मृज्याक्षतान् प्रास्य तत्र
शान्तिरस्त्वित्युदकधारामासिच्य दक्षिणामुखः प्राञ्जलिस्तिष्ठन्
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो माव्य-
गमत् बहुदेयञ्च नोऽस्तु इत्यनेन वरान् याचतेति पार्वणकल्प
एष चास्य पिण्डपितृयज्ञेन व्यतिषङ्ग एवमेवान्वष्टक्यं पूर्वेद्यु-
र्मासि मासि श्राद्धानि नयेदस्ति हि तेषु पिण्डपितृयज्ञकल्प
इति तत्र पूर्वेद्युरेकतन्त्रस्था होममन्त्राः एभ्योऽन्येषु चतुर्थ्या-
हिताग्निपार्वणे च पिण्डपितृयज्ञकल्पाभावात् अभ्यनुज्ञायां
पाणिष्वेव इति ब्राह्मणानां पाणिहोमो भुक्तशेषेण वोच्छिष्टान्ते
निपरणं यथा ब्राह्मणानाच्छादनान्तैरभ्यर्च्य भोजनार्थादन्ना-
दुद्धृत्य सर्पिषाक्ता होमपर्य्यं विनैव ब्राह्मणपाणिषु दक्षिणाग्रान्
दर्भानन्तर्धाय मेक्षणेन पाणिना वा ताभ्यामेव मन्त्राभ्यां द्वे
द्वे आहुती जुहोति सर्वेषु विरह्य वैकैकां नात्र मेक्षणानुप्रह-
रणं यदि पाणिना जुहुयात् सव्येन चावदानं सम्पादयेदथ
भुक्तशेषेणोच्छिष्टान्ते पिण्डान्निपृणीयाद्देहाये नमयेति समा-
नमन्यदेवं प्रत्याब्दिकादीनि मासि श्राद्धं यदि पर्वणि स्यात्
पार्वणं तदा तेन विकल्पते काम्यं चेत् क्रियते तदा पार्वणं
मासि श्राद्धञ्च तेनैव सिध्यतः ॥ १८ ॥

अथाभ्युदयिके नान्दीमुखाः पितर एकैकस्य युग्मा ब्राह्मणा अमूलदर्भाः प्रदक्षिणमुपचारो यवैस्तिलार्थः प्राङ्मुखो यज्ञोपवीती कुर्य्यादृजून् दर्भानासनं दक्षिणतो दद्यात् अर्घ्यपात्राणि प्राक्संस्थानि स्युः यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् पितॄन् इमान् लोकान् प्रीणयाहि नः स्वाहेति यवावपनं नान्दीमुखाः पितरः प्रीयन्तामिति यथालिङ्गं सकृदर्घ्यं निवेद्य नान्दीमुखाः पितर इदं वो अर्घ्यमिति प्रत्येकं विसृज्य दत्त्वानुमन्त्रणं द्विद्विर्गन्धादि दद्यात् अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति पाणिषूक्त्वोमस्तृमे षूपास्मै गायता नर इति पञ्च मधुमतीरक्षन्नमीमदन्तेति श्रावयेदनाचान्तेषु भुक्तायथा-नुपलिप्य प्रागग्रान् दर्भानास्तीर्य्य पृषदाज्यमिश्रेण भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात् पूर्वेण मन्त्रेण नान्दीमुखेभ्यः पितृभ्यः स्वाहेति वा यथालिङ्गमन्यदुदकेनानुमन्त्रणादीच्छन्ति नेह पिण्ड इत्यन्ये सर्पिषि दध्यानयति एवमेतत् पृषदाज्यमाह सम्पन्नमिति विसृजेत्तदेतत् पुंसवनादिष्वपत्यसंस्कारेषु अग्न्याधेयादिषु श्रौतेषु च पूर्तेषु च क्रियते महत्सु पूर्वेद्युस्तदहरल्पेषु तदिदमेके मातॄणां पृथक् कुर्वन्त्यथ पितॄणां ततो मातामहानामिति त्रितयमिच्छन्ति तस्माज्जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्य्यात्तस्याञ्जीवन्त्यां पितृमातामहयोः कुर्य्यात् पित्रोर्जीवतोर्मातामहस्यैव कुर्य्यात् त्रिषु जीवत्सु न कुर्य्यात् त्रिषु जीवत्सु न कुर्य्यात् ॥ १९ ॥

इत्याश्वलायनगृह्यपरिशिष्टे द्वितीयोऽध्यायः।

---

## तृतीयोऽध्यायः ।

अथ पितृमेधः संस्थिते दक्षिणपूर्वस्यां दक्षिणापरस्यां वा प्राक् दक्षिणायतं दक्षिणाप्रवणन्तद्दिक्प्रवणं वा यावानुद्वाहुकः पुरुषस्तावदायामं व्याममात्रन्तिर्यग्वाग्वितस्तिमात्रं खातं खनेयुरभित आकाशं बहुलौषधिकं यत्र सर्वत आपः प्रस्यन्देरन् एतदृहनस्य लक्षणं श्मशानस्य कण्टकिक्षीरिणः समूलान् परिखायोद्वासयेदपामार्गः शाकस्तिल्वकः परिव्याधांश्च पुत्राः केशश्मश्रुलोमनखानभिहारयेयुः कर्त्ताप्युत्य प्रेतस्यात्मनश्च ब्राह्मणवाचा शुद्धिमापादयेत् प्रेतं स्नापयित्वा नलदेनानुलिप्य नलदमालाञ्जपमालां वा प्रतिमुच्य मूलतोऽहतवाससा पादमात्रमवच्छाद्य शेषेण प्रत्यगग्रेण प्राक्शिरसमाशिरःपादमाच्छादयेयुः परिधानस्यान्त्यदशावच्छेदं कर्त्ता संगृह्णीयादथ तां दिशमग्रतोऽग्निन्नयन्ति प्रभूतं बर्हिराज्यञ्च चमसः स्रुवञ्च तिलान् कृष्णाजिनं कमण्डलुञ्च नयेयुरन्वञ्चं प्रेतमयुजो मिथुनाः प्रवयसः शिबिकेन गोशकटेन वा तमन्वञ्चोऽमात्यामुक्तशिखा अधोनिवीता ज्येष्ठप्रथमाः कनिष्ठजघन्याः नयेयुः एवं भूमिभागं प्राप्य कर्त्ताचान्तः प्राचीनावीती प्रेतस्यामुष्य स्वर्गप्राप्त्यर्थं पितृमेधं करिष्यामीति सङ्कल्प्य कर्मैतद्दक्षिणां दिशं गमयेत् खातादुत्तरपुरस्ताज्जानुमात्रं गर्त्तं खात्वोदकेन पूरयित्वा तेनोदकेनान्येन वा शमीशाखया त्रिः प्रसव्यमादहनं परिव्रजन् प्रोक्षत्यपेतवीत विचसर्पतात इति खातादुत्तरपश्चिमतोऽग्निमिन्धनानि नात्र तन्त्रं भवति ॥ १ ॥

अथाग्नेरुत्तरतश्चमसेनापः प्रणीय खाते हिरण्यशकलमाधाय तिलानवकिरेत् कुशचितिं चिनोति तस्यां बर्हिरास्तीर्य

कृष्णाजिनं चोत्तरलोमप्रेतमग्निमुत्तरेण हृत्वा दक्षिणशिर-
स्त्वितौ संवेशयन्ति तमुत्तरेण पत्नीन्तामुत्थापयेदुदीर्ष्वनार्यभि जीवलोकमित्यथ प्रेतस्य सप्तशीर्षण्यानि
हिरण्यशकलैरपिधाय घृतसिक्तान् तिलान् सर्वस्मिन् शरीरेऽव-
कीर्य्येममग्ने चमसं मा विजिह्वर इति पूर्णपात्रमनुमन्त्र्य
तूष्णीमाज्यमुत्पूयोत्तानोपस्थाय सव्यञ्जान्वाच्य जुहुयादग्नये
स्वाहा कामाय स्वाहा लोकाय स्वाहा अनुमतये स्वाहा पञ्च-
मीमुरसि प्रेतस्यास्माद्वै त्वमजायथा अयन्त्वदधिजायतां देव-
दत्त स्वर्गाय लोकाय स्वाहेति सव्ययेदग्निमवधून्वन्ति कुशैः
चिनोति कर्त्ता शिरसि चाग्निन्ददाति तं ज्वलयेदथैनं दह्य-
मानमनुमन्त्रयते प्रेहि प्रेहि पथिभिः पूर्व्यैभिरिति पञ्चानां
तृतीयमुद्धरन्नैनमग्ने विद होमाभिशोच इति षट् पूषात्वेत-
श्च्यावयतु प्रविद्वानिति चतस्र उपसर्प मातरं भूमिमेतामिति
चतस्रः सोम एकेभ्यः पवत इति पञ्चोरूणसावसुतृपा उदुम्ब-
लाविति चैका स एवं दह्यमानः सहैव धूमेन स्वर्गं लोकमे-
तीति विज्ञायते गृह्याग्निना दाहोऽनाहिताग्नेस्तत्पत्न्याश्च
सभर्तृकायाः कपालजेनान्येषां लौकिकेन च व्याहृतिहोम-
संस्कृतेन वा संस्कृतानां लौकिकेन नष्टाग्निवर्णकपाले क्षिप्त-
करीषादिजातोऽग्निः कपालजो यथार्थं मन्त्रवत्तूष्णीमसंस्कृता-
नाम् ॥ २ ॥

अथ कर्त्ता कुम्भमपां पूर्णं दक्षिणेंऽसेऽभिनिधाय सपि-
ण्डानुयातः परशुनाश्मना वा पश्चात्कृतच्छिद्रादविच्छिन्नया
कुम्भोदकधारयाग्निं परिव्रजन् परिषिच्य तमन्वक्षरास्येद-
थेमे जीवामि मृतैरावद्धवन्निति जपित्वा कनिष्ठपूर्वकाः
सव्यावृत्तो व्रजन्त्यनवेक्षमाणो यत्रोदकमवहद्भवति तत्राप्य
सकृन्निमज्ज्य शुचौ तीरे स्वच्छानातिस्थूलमुपलं स्थापयित्वा

दक्षिणाग्रेषु दर्भेषु निधाय काश्यपगोत्रदेवदत्तेति एकैकमु-
दकाञ्जलिं तिलोदकं तस्मिन्नुपले दद्युः स्त्रियश्चैवोदकाः
अथोत्तीर्य्य वासांसि परिदध्युः क्लिन्नानि अधोदशानि
सकृदेव निष्पीड्योदकदशानि विसार्य्य तथासीत आनक्षत्रदर्श-
नादादित्ये वा वीतरश्मावागारं व्रजेयुः कनिष्ठप्रथमा ज्येष्ठ-
जघन्याः, प्राप्य आगारं द्वार्य्यश्मानमग्निं गोमयमक्षतांस्ति-
लानपः पश्चात् स्पृष्ट्वा निम्बपत्राणि विदश्याचमेयुः, नैतस्यां
रात्रावन्नं पचेरन् क्रीतान्नेन लब्धान्नेन वा वर्त्तेरन्नशोचि-
नोऽक्षारलवणाशिनोऽधःशायिनो ब्रह्मचारिणश्च भवेयुः पयसा
पूपादि नाश्नीयुर्न दानादि कुर्य्युर्नित्यनैमित्तिकमतोऽत्र सञ्च-
रेयुः ॥ ३ ॥

अथ कर्त्तुरुदकविधिः अतस्यामुष्य दृषः च्युतस्य प्रमना-
र्थमुदकपिण्डे दास्यामीति सङ्कल्प्य शुचावुदकान्तेषु दर्भेषु
अतोपलं निधाय स्नापयित्वा काश्यपगोत्र देवदत्त प्रथमेऽह-
न्यपामञ्जलिस्त्वामुपतिष्ठतामित्युपलेऽञ्जलिं तद्विधिना प्रथ-
मेऽहन्येकं दद्यादेवमुत्तरेष्वादशमादङ्कस्तद्द्विगुणितां दत्त्वा-
ऽतीताह्नाञ्जलींश्चैव यदा दद्यादेवं दशाहेन शतमञ्जलयो भव-
न्त्यथैके दश दश दद्युरेकैकमेव वान्ये एतदाद्येऽहनि कुर्य्यात्
स एव तद्दशाहं समापयेदथ इत्थं तदुत्तरेषूपलाग्रेष्वन्यमादाय
तत्क्रियामादित आवर्त्तयेदन्तर्दशाहाद्दर्शसंस्थितेषु द्विचन्द्रो
दर्शश्च सिनीवाल्यां क्रियानियमान् कृतस्नान् समापयेत् पित्रो-
र्यथाकालमेव कुर्य्यात् ॥ ४ ॥

अथ पिण्डक्रियोदकं दत्त्वोपलाग्रे दक्षिणाग्रेषु दर्भेषु
प्राचीनावीती तिलांश्च निनीय सकृत् प्रक्षालितपक्वमन्नं
घृतेनाक्त्वा तस्मिन् पिण्डं काश्यपगोत्र देवदत्त एष पिण्डस्त्वा-
मुपतिष्ठतामिति तदहर्विशेषेण दत्त्वा पुनरप्सु च निनीयाने-

नोदकक्रिया पिण्डदानेनामुष्य क्षुत्तृट्क्षुधौ शाम्येतां तृप्तिरस्त्विति ब्रूयादेवं दशाहे दश पिण्डा भवन्ति पुनस्तानिनीय दद्याद्द्याद्योऽहनि कृतदेशे मृण्मये पात्रेऽप आपूर्य्य देवदत्तात्र स्नाहीति शिक्ये स्थापयेदन्यस्मिन्नप आसिच्य तत् पयः पिबेति तदुपरि निदध्यादित्येके पृथक् शिक्ये वा दीपश्चाथो दद्यादेवमेतदन्वहं कुर्य्यादथ चाद्येऽहनि नग्नप्रच्छादनं वासः श्राद्धं च दद्यात् न दद्यात् वा श्राद्धद्वयनिषेधादेव सञ्चयनश्राद्धं सम्पद्यते ॥ ५ ॥

अथ नव श्राद्धानि दशाहेषु विषमदिनेष्वामेन कुर्य्यात् प्रेतमभिसन्धाय ब्राह्मणमुदङ्मुखम् उपवेश्य तस्मिंस्तूष्णींस्तिलानवकीर्य्य काश्यपगोत्र देवदत्तामुष्मिन्नहनि एतदामं त्वामुपतिष्ठतामिति तदहः सर्व्वस्नेनोत्सृज्य पिण्डं चामन्त्रोक्तवत्प्रदाय स्नायादेष विधिरन्तर्दशाहकर्मणि ॥ ६ ॥

अथ सञ्चयनं संवत्सरान्ते चेत्सपिण्डयिष्यन् कृष्णपक्षस्योर्द्ध्वं दशम्यामयुजासु तिथिष्वथ द्वादशाहे सपिण्डयिष्यंश्चेदन्तर्दशाहे षष्ठाष्टमदशमाद्यवर्ज्यमेकनक्षत्रेषु पुमांसमलक्षणे कुम्भे सञ्चिनुयुः कुम्भ्यामलक्षणायां स्त्रियमयुजो मिथुना वृद्धास्तं देशं क्षीरोदकेन शमीशाखया त्रिः प्रसव्यं परिव्रजन् कर्त्ता प्रोक्षति शीतिके शीतिकावतीत्यथाङ्गुष्ठोपकनिष्ठिकाभ्यां एकैकमस्थ्यसंगृह्याऽशब्दयन्तः कुम्भे निदध्युः पादौ पूर्वं शिर उत्तरं सुसञ्चितं सञ्चित्योपरि कपालेन शूर्पेण सम्पूर्य्य दहनलक्षणायां भुवि यत्रैनं वर्षा आपो नाभिभवेरन् तत्र गर्त्तं च कुम्भमवदध्युरुपसर्प मातरं भूमिमेतामित्यथोत्तरया पांसुन्व सम्पूर्य्योत्तराञ्जपेदथ कुम्भमुत्तेस्तभ्नामि पृथिवीं त्वत्परीति कपालेन कृतलक्षणेन पिधाय मृदाच्छादयेद्यथा न दृश्येतास्थि दाहायतने मृदा वेदिं कृत्वा तांनुप्रत्नानम्भसास्थापितान् प्राङ्-

मुखान् दक्षिणापवर्गान् निधाय मध्यमे प्रेतं उत्तरे श्मशान-वासिनः पूर्वप्रेतान्दक्षिणे तत्सखींश्चावाह्योपलानलङ्कृत्याभ्य-च्याग्रतस्तेभ्य एकैकं पिण्डमुत्सृज्योदकुम्भं पादुकाच्छत्राणि दद्यादथानवेक्षं प्रत्याव्रज्य स्नात्वागारमुपेयुस्तद्दिने मृत्कोष-सिकतासु बीजान्यपेयुः श्राद्धं पाययन्त्यु: ॥ ७ ॥

अथ दशमेऽहनि दन्तादीन् संशोध्य दीपादि मृतदेशादु-द्धास्य तमुल्लिख्य शुद्धया मृदा प्रतिपूर्य गृहं संशोध्य बीजा-ङ्कुराण्यादाय जलाशयमेत्याथ कर्त्ता जलान्ते चतुरस्रां वेदिं कृत्वा त्रीनुपलानभ्यक्तस्नापितान् दक्षिणाग्रसंस्थान् स्थापयित्वा मध्यमे प्रेतं उत्तरे तत्सखीन् दक्षिणे यममित्यावाह्योपलान-लङ्कृत्यार्चयित्वा तदन्ते तेभ्य एकैकं पिण्डं दत्त्वोदकुम्भं छत्र-पादुकाश्च निवेद्य सर्वतोऽलङ्करणानि दद्यादथ केशादि वाप-यित्वा ज्ञातिबान्धवाः स्नातास्त्रींस्त्रीनञ्जलीन् प्रेताय दद्यु-र्नैषामुपलनियमोऽथ पुरन्ध्र्योऽभ्यक्तस्नाताः शुक्लवाससश्चक्षुषी चाञ्जयेयुरथ पूर्णं सपल्लवमुदकुम्भं धृत्वा अन्यागारं व्रजेयुरन्ये-नान्नेन वा वर्त्तेरन् गृहे वा पचेरन् ॥ ८ ॥

अथैकोद्दिष्टन्तत् त्रेधा भवति नवं मिश्रं पुराणं चेत्यन्तर्द-शाहे नवं मिश्राणि मासिकानि चतुर्दशाद्दौ पुराणानि, तत्र नवानि व्याख्यातानि, मिश्राणि प्रतिमासं मृताहे द्वादशमा-सिकानि तेषामाद्यमेकादशेऽह्नि कुर्युरूनानि चत्वार्यूनमासि-कमेकं त्रैपक्षिकमूनषाण्मासिकमूनाब्दिकं चेति तानि तस्य तस्यान्ते चतुरहः कुर्यात्र त्रिद्विपुष्करेषु नन्दाभूतामायास्वा भार्गवे कृत्तिकासु कुर्यान्नन्दासु तिथिषु भानुभौममन्दानां त्रिपादर्क्षाणां च योगे त्रिपुष्करमकर्क्षयोरेकतरयोगे द्विपुष्कराणि तानि इमानि षोडशश्राद्धानि स्वे स्वे काले कृत्वा पूर्णसंवत्सरे मृताहे सपिण्डीकरणं कुर्युरर्वाग्वाक् सपि-

ण्डीकरणं कृत्वाऽवशिष्टानि स्वकाले प्रत्याब्दिकवत् कुर्य्युरन्ये-ऽर्वागपकृष्टमासिकानि कृत्वा सपिण्डीकरणं कुर्वन्ति तानि च पुनः स्वकाले प्रत्याब्दिकवत् कुर्वन्ति तत्र आद्ये ब्राह्मणा-भावे अग्नौ जुहुयात् पुरुषत्रये सार्ववर्णिकमन्नमादाय बहि-रग्निमुपसमाधाय सव्यं परिसमूह्य पर्य्युक्ष्योदीरतामवर उत्प-रास इति सूक्तेनावर्त्य प्रत्यृचं जुहुयादेतनाम्ना यमनाम्ना वा स्वाहान्तेन पुनरेतद् ब्राह्मणेऽपि जुहुयात् ॥ ९ ॥

अथैकोद्दिष्टविधिरेक उद्दिश्य एको ब्राह्मण एकमर्घ्यपात्रं पाणावेकाहुतिं तदहर्निमन्त्रणं न दैवं न धूपदीपौ न स्वधा पितृनमःशब्देनावाहनं नाभिश्रवणं कृतपञ्चशौचमाचान्तं ब्राह्मणं परिश्रित्य उदङ्मुख उपवेश्य पार्वणवदाचमनादि कुर्य्यात् तिलोऽसि मन्त्रेण स्वधया पितॄनिमानित्यूहस्तूष्णीं वा तिलावपनं तूष्णीं निवेद्योक्तवद्दत्त्वा तत्पात्रं न्युब्जं निधा-योक्तवदाच्छादनान्तभोजनार्थादन्नादुद्धृत्य घृताक्तं कृत्वा ब्राह्म-णस्य पाणौ दर्भानन्तर्धाय देवदत्त स्वाहेति सकृदवदानेनै-कामाहुतिं जुहुयात्सर्वंहुतमग्नौ प्रास्येदथ तृप्तौ भुक्तशेषमावेद्यै-तत्ते काश्यपगोत्र देवदत्तेत्येकः पिण्डः शुन्धन्तां पितेति निन-यनमन्त्रणादि तूष्णीं नात्र पत्नीं प्राशयेत् दक्षिणां दत्त्वाभिर-म्यतामिति विसर्जयेत् ॥ १० ॥

अथ सपिण्डीकरणं संवत्सरे पूर्णे द्वादशाहे वा त्रिमासे वा षण्मासत्रिपक्षयोरप्येके प्रेतं तत्पित्रादिभिस्त्रिभिः सपि-ण्डयेदविधवा स्त्रियस्तत्पत्यादिभिर्विधवास्तश्वश्र्वा पुत्रिकास्तत्-पिता नैतदनपत्यानां कुर्म्मतानाञ्च भवति न पिता पुत्रस्य नाग्रजोऽनुजस्य। तत्र प्रेतायैको ब्राह्मणो दैवे द्वौ पित्रे च त्रयो नियमेन प्रेत एकोद्दिष्टं पितृषु पार्वणम्। कृतपञ्चशौचा-नाचान्तान् द्वौ दैवे पूर्ववदथ प्रथमं प्रेतं अनन्तरं पितॄन् पूर्व-

मनुप्रवेश्य देवानभ्यर्च्याऽथ पित्रेऽर्घपात्रासादनान्ते चतुर्ष्व-
र्घपात्रेषु दर्भानयुग्मानन्तर्धायाप आसिच्य सकृदनुमन्त्र्य
प्रेतार्घे तूष्णीं तिलानोप्यान्येषु मन्त्रेणावपेत्तानि चत्वारि
गन्धादिभिरभ्यर्चयेरन् अथ प्रेतपात्रं प्रेताय तूष्णीं निवेद्या-
र्घोदकं चतुर्थांशन्त्वांशत्रयं त्रिषु पितृपात्रेषु समानीय आकू-
तिरिति निनयेत् अथ पितृपूजायदर्घनिवेदनादि कुर्य्यादथ
भोजनार्थादन्नादुद्धृत्य घृतेनाक्तानुज्ञाप्याग्नौ वा कुर्य्यात्पाणिषु
वा जुहुयादेके पाणिहोमे देवदत्ताय स्वाहेति प्रेताय हुत्वा
पितृणां मन्त्राभ्यां जुहोति सर्वत्र हुतशेषं सर्वेषां पाणिषु ददाति
ते तत्पात्रे निधाय आचमेयुरथ तृप्तेषु भुक्तशेषान्नात्सार्ववर्णि-
कमुद्धृत्य प्रेताय पिण्डमेकं तूष्णीं निरूप्य त्रीन् पितृभ्यः पार्व-
णवद्दत्त्वा प्रेतपिण्डं त्रिधा विभज्य पितृपिण्डेषु त्रिष्वादधाति
मधुवाता इति तिसृभिः सङ्गच्छध्वमिति द्वाभ्यां अनुमन्त्र्य
शेषं पार्वणवत् कुर्य्यात् ॐ स्वस्तीति वाचयित्वा विसर्जयेत् ॥ ११ ॥

अथ सपिण्डीकृताय प्रेताय तदहरेवामेन श्राद्धं पार्वण-
वत् कुर्य्यात् पितृलोकं यातः पाथेयमेतदस्येति तत्परेद्युरपि
प्रपितामहस्य कार्य्यमित्येके न हि तस्यावै तदुत्तरं श्राद्धमस्ति
तस्यैतत् पाथेयमित्यथ दीपान् प्रज्वाल्य पचनाग्निं सहभस्मान-
मुद्धास्यायतनं संसृज्य श्रोत्रियागारादग्निमानीय तस्मिन्नुपस-
मादध्युः पुत्रादयोऽभ्यक्तस्नाताः शुक्लवाससः स्वस्त्यादि वाचयित्वा
ज्ञातिबन्धुसहिता भुञ्जीरन् अर्वाक् संवत्सरात्सापिण्ड्ये मासि-
कानि मासे वर्षे पक्षेऽवशिष्टान्यनुमासिकसंज्ञानि यदा पुनः
क्रियते संवत्सरान्तसपिण्डीकरणस्थाने संवत्सरविमोकश्राद्धं
पार्वणवत् कुर्य्यात् तानि दाक्षिणात्याः सर्वाण्याकृष्य कुर्वन्ति येन
केनापि सापिण्ड्ये पृथक् मातृश्राद्धे मातरं पितामह्यादिभि-
रेव योजयेद्विशेषांस्तु धर्मशास्त्रेभ्यः प्रतीयात् ॥ १२ ॥

अथातीतसंस्कारः स चेदस्तदेशाद्दे स्यात्तत्रैव तत्रैव समा-पयेदूर्ध्वमाहिताग्नेर्दाहादारभ्य सर्वमाशौचं कुर्य्यात् कर्म्म च यथाकालमन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः सर्वमा-शौचं गृहीताशौचयोस्तु कर्म्माङ्गं त्रिरात्रं तत्र प्रथमेऽहनि संस्काराञ्जलयः शतं वा दश वा भवन्ति यदा शतं तदा प्रथमे-ऽह्नि त्रिंशदञ्जलयः त्रयः पिण्डा द्वितीये चत्वारिंशदञ्जलय-श्चत्वारः पिण्डाः अस्मिन् सञ्चयनमथ तृतीये त्रिंशदञ्जलयस्त्र-यश्च पिण्डा इति विभागोऽथ यदि दशाञ्जलयस्तदा प्रथमेऽह्नि त्रयोऽञ्जलयो द्वितीये चत्वारः सञ्चयनं तृतीये च त्रयः एकैकः पिण्ड इति विभजेन्नवश्राद्धानि प्रथमेऽह्नि द्वितीये द्वे एकस्तृ-तीये दद्यादेकैकमेव वा यथा प्राप्तमन्ये दाहाद्दत्तास्थीनि संस्कुर्य्यात्सोऽयमतीतसंस्कार उदगयने शुक्लपक्षे प्रशस्तः तेनैव नन्दा त्रयोदशीभूतदिनत्रयेषु कुर्य्यात् न सौरिशुक्रयोर्नयास्या-न्ये न्द्राद्रीश्लेषामघामूलधनिष्ठापञ्चकं त्रिपुष्करेषूत्तराभ्यां नक्ष-त्रेषु रोहिणीपुनर्वसुफाल्गुनीचित्राविशाखा अनुराधापूर्वा-षाढा द्विपुष्करेषु च नैत्यके नैव व्यतीपाते वैधृतौ विषुवे न च कर्क्कचतुर्थाष्टमद्वादशचन्द्रमसि न च काकादिस्पर्शोपहतेषु अस्थिषु कुर्य्यात् तानि गोक्षीरेणाष्टशतं कृत्वा द्वादश कृत्वा वा पवमानीभिः शुद्धिमतीभिश्च चालयित्वा संस्कुर्य्यात्, अस्थ्य-भावे पालाशप्रतिरूपकं कुर्य्यात्, त्रीणि शतानि षष्टिश्च पला-शवृन्तानि आहृत्य तैर्यथावयवं पुरुषरूपं कुर्य्यात् ॥ १२ ॥

अथ पालाशविधिः। शिरश्चत्वारिंशता ग्रीवां दशभिः उरस्त्रिंशतोदरं विंशत्या बाहू शतेनाङ्गुलीर्दशभिरिति, तदूर्णा-तन्तुबन्धैः पुरुषवत् कृत्वा स्नापयित्वा वाससा चाहतेनाच्छाद्य यथावत्संस्कुर्य्यात् सञ्चयनकर्म्मणा च तत् संहृत्य पुण्येऽम्भसि क्षिपेत् एवं दुर्मृतानां पालाशविधिमेव कुर्य्यात् शरीराणि

च तेषां श्मशानभ्यां क्षिपेत् त्रेताग्नीनप्सु क्षिपेत् गृह्यं चतु-
र्थ्यां यज्ञपात्राणि दहेत् संस्कारश्च तेषामब्दादृतुत्रयाद्वा ऊर्ध्वं
नारायणबलिं कृत्वा कुर्यादधिकं प्रायश्चित्तं कृत्वा सद्य एव
वा तेष्वाशौचम् आहिताग्निषु पूर्णं त्रिरात्रमन्येषु ॥ १४ ॥

अथ नारायणबलिरर्वाक् संस्काराच्छुद्धे काले शुक्लैका-
दश्यां स्नातः शुचौ देशे विष्णुं वैवस्वतं प्रेतञ्च यथावदभ्यर्च्य
तदग्रे तिलमिश्रान् मधुघृतप्लुतान् दशपिण्डान् विष्णुरूपं
प्रेतं ध्यायन् काश्यपगोत्र देवदत्तायन्ते पिण्ड इति दक्षि-
णाग्रेषु दर्भेषु दक्षिणामुखः प्राचीनावीती पराचीनेन पाणिना
दत्त्वा पिण्डान् गन्धादिभिरभ्यर्च्य प्रवाहणान्तं कृत्वा नद्यां
क्षिपेत्। अथ रात्रावयुग्मान् ब्राह्मणान् निमन्त्र्योपोषितः
श्वोमध्यन्दिने विष्णुमभ्यर्च्य प्रेतमुद्दिश्य ब्राह्मणानेकोद्दिष्ट-
विधिना भोजयित्वा तृप्तेषु ब्राह्मणसमीपे पिण्डविधिना
निनयनान्तं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय सपरिवाराय
यमाय विष्णो अयन्ते पिण्ड इत्येवं चतुरः पिण्डान् भुक्तशे-
षेण दक्षिणसंस्थान्दत्त्वाऽथ पञ्चमं काश्यपगोत्र देवदत्तेति प्रेतं
ध्यात्वा तद्रूपाय विष्णवे विष्णोऽयन्त इति दद्यात्, अथाचा-
न्तान् दक्षिणया सन्तोष्यैकन्तेषु गुणवन्तम् अविशेषतो वस्त्रा-
भरणादिगोहिरण्यैः प्रेतबुद्ध्या तोषयेत्, अथ तैः पवित्रपा-
णिभिः प्रेताय काश्यपगोत्रायायन्ते तिलोदकाञ्जलिरिति तिलो-
दकं दापयित्वाऽनेन नारायणबलिकर्मणा भगवान् विष्णुरिमं
देवदत्तं शुद्धमपापं कर्मार्हं करोत्विति वाचयित्वा विसृजेदेष
नारायणबलिकल्प एवमन्यामपि स्वाभिमतदेवतां यमादितो-
यामभ्यर्च्य विधिमिमं कुर्यात्सोऽप्येनमपापङ्करोति न तु पुण्य-
कृतोऽपि बलिमेनमकृत्वा पारलौकिकं कुर्यात् कृतं नोपति-
ष्ठतेऽन्तरिक्षे विनश्यति तस्माद्यथासम्भवमपि कुर्यात् ॥ १५ ॥

अथ नागबलिः सर्पहतानान्दारुमयं मृण्मयं वा पञ्चफणं सर्पङ्कृत्वा भाद्रपदस्यान्यस्य वा मासस्य शुक्लपञ्चमीमारभ्य यावत् संवत्सरं प्रतिमासन्तस्यामुपोषितो रात्रौ पञ्चामृतैः स्नापयित्वा शुचावासने शुचिः सुरभिगन्धपुष्पधूपदीपैरभ्यर्च्य प्रणमेदनुमासमेकैकमनन्तं वासुकिं शेषं पद्मङ्कम्बलं कर्कोटकमश्वतरं धृतराष्ट्रं शङ्खपालं कालीयन्तक्षकं कपिलमिति पायससर्पिःक्षीरापूपैर्बलिमुपहृत्य जागरित्वा श्वो भूते त्रिवृतान्नेन ब्राह्मणान् भोजयित्वा पूर्णे संवत्सरे पञ्चम्याञ्च स्नात्वा सौवर्णं सर्पङ्गाञ्च ब्राह्मणाय दत्त्वान्यांश्च यथेष्टं भोजयित्वा दक्षिणया तोषयित्वा नागान् प्रीतिं वाचयेदेष नागबलिरथोभयोः पक्षयोः पञ्चमीषु संसृष्टायां भुवि पिष्टेन सर्पमुल्लिख्य शुक्लसुरभिगन्धादिभिरभ्यर्च्य क्षीरमोदकान् निवेद्योपस्थाय मुञ्च मुञ्च देवदत्तमिति प्रार्थ्य सहबन्धुभिर्मधुरमश्नीयादेवं संवत्सरान्ते नारायणबलिञ्चोक्तवत् कृत्वा तत ऊर्ध्वं कर्म कुर्यात् ॥ १६ ॥

अथ पुराणमेकोद्दिष्टं प्रेतचतुर्दश्यां शस्त्रहतानामिष्यते प्रत्याब्दिके च व्युत्क्रमम्‌तानां सर्वेषां प्रत्याब्दिक कृत्ये के पार्वणैकदेशवत्तन्त्रं सर्वं पितृशब्दमेकवदूहेत् पाणौ सोमाग्निमन्त्राभ्यामेव होमो नैकेऽत्रापि दैवं कुर्वन्ति नार्घ्यपिण्डावपीत्येके ॥ १७ ॥

अथ वृषोत्सर्गः शूलगवं कार्त्तिक्यां पौर्णमास्यां वैशाख्यां वा रेवत्यां वाश्वयुजीयस्य गोर्जीवत्पुत्रायाः पयस्विन्याः सुतं श्रेष्ठं स्वस्य यूथस्याकुण्ठनमपृषतमेकहायनं द्विहायनं वा नीलं बभ्रुं पिङ्गलं लोहितं वा लक्षण्यमित्येके कामं कृष्णमालोहितं श्वेतमष्टभिः सह वत्सतरीभिश्चतसृभिर्वा श्रीहियवमतीभिरद्भिरापोहिष्ठीयाभिर्वामदेव्येन कर्म सङ्कल्प्य पूर्वप्राचमभिषि-

श्मशान्तीरे गोष्ठे चतुष्पथे वाग्निमुपसमाधाय रौद्रं स्थाली-
पाकं सर्वहुतं हुत्वा सौम्यं पायसं पैष्टं यावकं पूर्णपात्रोदकेन
मार्जयित्वाग्निं त्रिः प्रदक्षिणं पर्य्यानीय कद्रुद्रायेमा रुद्राया
ते पितरि मा रुद्राय स्थिरधन्वते गिर इति सूक्तैस्ततो दिश
उपस्थाय प्राञ्चं प्रागुदञ्चं वा वत्सतरीसमेतमुत्सृज्य एनं युवानं
पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण इमाञ्च त्वां प्रज-
नुषा सुवाचा रायस्पोषेण समिधा चिनोमि शान्ता पृथिवी
शिवमन्तरिक्षं द्यौर्नो देव्यभयं नो अस्तु शिवा दिशः प्रदिश
उद्दिशो न आपो विद्युतः परियान्तु सर्वत इत्यृषभं मासमा-
नानामिति च सूक्तेन उपस्थाय स यत् पिबति खादति लाङ्गू-
लश्चोदकपूर्णमुदस्यति तेन देवानृषीन् पितॄंश्च प्रीणाति वंश्यांश्च
सप्तममुभयतः परावरानुद्धरति प्रेतार्थमुत्सृष्टं महतो नरकादु-
त्तारयति तस्मादेकादशेऽह्नि प्रेताय वृषमुत्सृजेदाद्यमासिकं
दत्त्वा सोऽयं वृषोत्सर्गः स्वर्ग्यः पशव्यो वृषभमुत्सृज्य महापशु-
र्भवतीति विज्ञायते नानुत्सृष्टः स्यादित्याचार्य्यः तस्मान्नित्य-
मेके रुद्रमेव जयन्ते स एव पशुपतिरिति शन्तातीयञ्जपन्
गृहमेत्य सर्पिष्मौदनं ब्राह्मणान् भोजयित्वाग्नीरुद्रः सर्वः पशु-
पतिरुग्रः शूली भवो महादेव इति नामभिरर्चयेद् रुद्रमेव वा
यथासम्भवमुद्दिशेत् स्वस्त्ययनं वाचयेदेवमेतानि कर्माणि यथोक्तं
कुर्य्यात्सर्वाणि श्रेयांस्याप्नोति तदेतदाश्वलायनगृह्यपरिशि-
ष्टम् । नम आश्वलायनाय नम आश्वलायनाय ॥ १९ ॥

इत्याश्वलायनगृह्यपरिशिष्टे तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः ।

अथ पूर्त्ताभ्युदगयन आपूर्य्यमाणपक्षे ज्योतिर्विदुक्तपुण्यदिने पूर्वेद्युः कृतस्वस्तिवाचनस्तत ईशान्यां चतुरस्रां चतुरङ्गुलमुच्छ्रितां हस्तमात्रां वेदिं कृत्वा यथोक्तविधानेन वास्तुमण्डलं कृत्वा गृह्योक्तवदुदीच्यमभिषेककुम्भन्निधायाभीत्युच्यते वास्तुमूर्त्तिं सुवर्णेन कृत्वाऽग्न्युत्तारणं सम्पाद्य प्रणवव्याहृतिपूर्वकं ॐ नमो भगवते वास्तुपुरुषाय महाबलपराक्रमाय सर्वदेवाधिवासाश्रितशरीराय ब्रह्मपुत्राय सकलब्रह्माण्डधारिणे भूभारार्पितमस्तकाय पुरपत्तनप्रासादगृहवापीसरःकूपादिसन्निवेशसान्निध्यकराय सर्वसिद्धिप्रदाय प्रसन्नवदनाय विश्वम्भराय परमपुरुषाय चक्रशार्ङ्गधराय वरदाभयहस्ताय वास्तो नम इति मन्त्रेणेशान्यशिरसं नैर्ऋतिपादमाग्नेयजानुकं वायव्यकूर्परमाकुञ्चितकरमुत्तानं वास्तुपुरुषं वास्तुमण्डले आवाह्याथ प्रागुदीच्यामारभ्य प्रणवादिनमोऽन्तनाम्ना शिखिनं पर्जन्यं जयन्तं कुलिशायुधं सूर्य्यं सत्यं भृशमाकाशं वायुं पूषणं वितथं ग्रहनक्षत्रं यमङ्गन्धर्वं मृगराजं मृगं पितॄन् दौवारिकं सुग्रीवं पुष्पदन्तं वरुणं असुरं शोकं पापं रोगं महीं मुख्यं भल्लाटं सोमं सर्पानदितिञ्च संपूज्याथेशानकोणद्वयशिष्टपदेष्वपः सावित्रीमिकादशरुद्रान् पूजयित्वा ब्रह्मभवनस्य पूर्वादिचतुर्दिक्ष्वग्न्यादिचतुर्दिक्षु च तिष्ठन्ति तेषु क्रमेणार्य्यमणं सवितारं विवस्वन्तं विबुधाधिपं मित्रं राजयक्ष्माणं पृथ्वीधरमापवत्सञ्च पूजयित्वा मध्ये ब्रह्माणं सम्पूजयेत् ब्रह्मणमादितः कृत्वा त्रिंशत्समित्येके ॥ १ ॥

अथ बहिर्मण्डलादीशान्यादिचतुर्दिक्षु चरकीं विदारकीं पूतनां पापराक्षसीमथ प्रागादि च स्कन्दमर्य्यमणं जृम्भकं पिलिपि-

श्च पूजयित्वौदनपायसाज्यदधिमधुशाकसूपसमन्वितनाना-
भक्ष्याणि समर्प्य प्रणम्य तत्समीपे यवगोधूमनिष्पावमुद्गमाषादि-
सर्वं बलिं दत्त्वा, यज्ञभागं प्रतीच्छस्व पूजां चैव बलिं मम।
नमो नमस्ते देवेश भव स्वस्तिकरो मम॥ इति संप्रार्थ्य परिवा-
रदेवताभ्यो बलिं दत्त्वाथ वास्तुसमीपे हस्तमात्रकुण्डे स्थण्डिले
प्रोक्तविधिनाग्निं प्रतिष्ठाप्यान्वाधायाज्यभागान्तं कृत्वा वास्तो-
ष्पते प्रतिजानीह्यस्मानिति चतसृभिश्च होमं कृत्वा शिख्यादि-
पिलिपिञ्छान्तान् आज्येन हुत्वा होमशेषं समाप्याथ यज-
मानो वास्तुमूर्त्तिं रौद्रकोणेऽधोमुखीं गर्त्ते प्रच्छादयेदाचार्याय
वा दद्यादथाचार्यं गोहिरण्यादिभिः परितोष्य नमस्कृत्य क्षमा-
पयेदन्येभ्यो ब्राह्मणेभ्यो यथाशक्ति दक्षिणां दत्त्वा कृतमङ्गल-
स्नानो ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयेदथ लब्धविप्राशीः
सह बन्धुभिर्भुक्त्वा यथाशास्त्रं मठादेः प्रतिष्ठां कुर्यात् इति
वास्तुपूजनविधिः॥ २॥

अथ प्रतिमाद्रव्याणि मुक्ताफलशिलादारुहेमताम्ररजत-
कांस्यमृत्तिकादीनि, महानीला यशःप्रदा दारुजा कामदा
सौवर्णा भुक्तिमुक्तिप्रदा राजता स्वर्गदा ताम्रमयी आयुर्वर्धिनी
कांस्या आपद्धन्त्री पैत्तली शत्रुनाशिनी शैला सर्वभोगप्रदा
स्फाटिका दीप्तिदा मृण्मयी महाभोगप्रदा दशाङ्गुला पञ्चा-
ङ्गुला वा गृहे प्रतिमा पूज्या नाधिका, अधिकाङ्गा शिल्पी
हन्त्री कृशा धान्यधननाशिनी कृशोदरी दुर्भिक्षकरी निर्मांसा
धननाशिनी वक्त्रहीना दुःखप्रदा पादकृशा दुःखदा हीन-
नासा भ्रमकरी हीनजङ्घोन्मादकरी हीनवक्षःस्थला पुत्रमित्र-
नाशिनी कटिहीना मरणदा सम्पूर्णावयवायुर्लक्ष्मीप्रदा।
शालग्रामनर्मदामूर्त्तिवैदूर्यजकाश्मीरजसूर्यकान्तस्फाटिकर-
सराजनिबद्धगारुत्मजमूर्त्तीनामपि प्रतिष्ठाविधिं कुर्यान्न-

मूर्त्तिंप्रतिष्ठां गर्वान्मोहान्मूढभावादकृत्वा पूजने सर्वोपद्रवदा-
रिद्र्यरोगायशोनिन्दाऽचिरायुरन्विताः भवन्ति, प्रतिष्ठा-
विधिमकृत्वा प्रतिष्ठाकारणेनेति पूर्वोक्ता दोषाः, प्रतिष्ठाकरणे
महाभाग्यवृद्धिरिति ॥ ३ ॥

अथ श्वो भूते नित्यं निर्वर्त्य श्रुतशीलवृत्तसम्पन्नं रहस्य-
माचार्यं ऋत्विजश्च तादृशान् षोडशाष्टौ वा चतुरो वा
विधिना वृत्वा मधुपर्कं विधाय वस्त्रालङ्कारादि तेभ्यो दद्याद्
द्विगुणमाचार्याय ततस्तूर्यवेदघोषैः प्रतिष्ठास्थापनान्तं कृत्वा
प्रासादाग्रे दशहस्तस्थानं चतुर्द्वारं प्रागारभ्य प्लक्षोदुम्बराश्व-
त्थन्यग्रोधतोरणलसद्द्वारशाखं हेमरत्नकणधूम्रमौक्तिकविचित्र-
श्वेतवर्णध्वजपताकादिभिः पूर्वाद्यष्टदिक्षूपशोभितं मण्डपं
तन्मध्ये चतुरस्रां तत्परिमाणसंख्यामेकहस्तोच्छ्रितां वेदिकां
कारयेत्तथा प्रागादिकुण्डान्युक्तलक्षणानि हस्तमात्राणि चतुर-
स्राणि वासयोनिमेखलानि स्युः पञ्चचतुरेककुण्डविधानेन
वाथाचार्यः कुण्डमैशान्यां सर्वहोमसाधनं प्रतिष्ठाप्य मण्ड-
पस्योत्तरतो देवस्नानमण्डपं शुभहस्तैः कृत्वा अभिषेकसाध-
नानि स्थापयित्वेति तिष्ठेति देवं प्रासादं प्रादक्षिण्येनानीया-
ऽक्षणेनेति स्नानमण्डपे प्रवेश्य वेदिकास्तीर्णशय्यायामास्ती-
र्णायां सोपस्करायाममुकं स्थाप्यासूरजेति रथमारोप्य गन्धा-
दिना सम्पूज्य ब्राह्मणैः सह शान्तिसूक्तपाठैस्तूर्यघोषैश्च
शास्तीर्णायां सोपस्करायामवस्थाप्य सर्वसम्भारान् सम्भृत्य
कर्त्ता स्नातः प्राणानायम्य प्रतिष्ठाप्य देवतामन्त्रेण विविधं
न्यासं कृत्वा पुरुषसूक्तेन वा देशकालौ स्मृत्वा ॐ प्रतिष्ठाङ्करो-
मीति सङ्कल्प्य द्वारजापक ऋत्विजाचार्यांस्तत्कार्ये नियोज-
येत् ॥ ४ ॥

अथाचार्यः प्राणानायस्य मन्त्रदेवतामयो भूत्वा यागभूमिं

प्रासादं स्नानशालायामापोहिष्ठेति तिसृभिः कुशोदकेनाभ्युक्ष्य सितसर्षपान् प्रकीर्य देवा आयान्तु यातुधाना अपयान्तु विष्णो देवयजनं रक्षस्वेति रक्षां कृत्वा प्रतिद्वारं कलशद्वयं सोदकं सपल्लवं प्रतिष्ठाप्य लोकपालानावाह्यार्चयित्वा देवस्नानशालां कृत्वा प्रणिपत्य देवं प्रार्थयेत्। स्वागतं देवदेवेश विश्वरूप नमोऽस्तु ते। शुद्धेऽपि त्वदधिष्ठाने शुभं कर्म सहस्वतामित्यथ देवाधिष्ठानं शुद्धेन घृतेनाभ्यज्य यवगोधूमचूर्णैरुद्वर्त्योष्णोदकेन स्नापयित्वा शीतलजलेन संस्नाप्य पीठान्तरेऽवस्थाप्य दिव्यधूपेन धूपयित्वा पुष्पैः सम्पूज्य नवोत्तमेन वाससा वेष्टयित्वा घरमार्दनं बलिन्दद्यादथ देवमभ्यर्च्य गजाश्वारण्यवराहोत्खातवल्मीकपर्वतसङ्गमह्रदराजद्वाराग्निहोत्रगोष्ठचतुष्पथवृषभशृङ्गस्थानानीतमृदा द्वादशकृत्वः सम्यक् शोध्य जलेन प्रक्षाल्य क्षीरवृक्षकषायैः पञ्चाशदोषधीः कषायेण तीर्थजलेन पञ्चामृतेन पञ्चगव्येन रत्नोदकेन फलोदकेन पुष्पोदकेन शृङ्गोदकेन शुद्धोदकेन श्रीसूक्तपवमानेन पुरुषसूक्तादिमन्त्रान् पठन् संस्थाप्य पीठान्तरे निवेश्याभिवस्त्रेति वस्त्रयुग्मेनावेष्ट्याक्षतगन्धपुष्पधूपदीपाष्टकमहानैवेद्यैः सम्पूज्य तैजसपात्रं मधुसुवर्णशलाकया गृहीत्वा चित्रं देवानामिति पार्श्वे स्थित्वा सतूर्यघोषमेकैकं समं उन्मीलयेदथादर्शसुवर्णेन भक्ष्यभोज्यानि दर्शयेच्च लिङ्गादिषु कुर्य्यादथाचार्य्याय धेनुं ब्राह्मणेभ्यश्च यथाशक्ति हिरण्यन्दद्यादथ पुरुषसूक्तेन देवं स्तुत्वोत्तिष्ठ ब्रह्मणस्पत इत्युपस्थाय कर्त्ता विश्वतश्चक्षुरित्युपस्थाय रथे तिष्ठन्निति रथमारोप्य कनिक्रददिति सूक्तपाठैः सचतुर्य्यघोषैः मण्डपप्रादक्षिण्येनोत्तरद्वारेणाक्षण्णेत्यानीय वेद्यां कुशप्रस्तरे कशिपौ शुभ्रवस्त्रेणाच्छाद्य तत्र प्राक्शिरसं शाययेत् स्थविरप्रदेशे वस्त्रवेष्टितं सपल्लवं सोदकं कलशं प्राजापत्योऽयं मुक्तमस्थिखुर्वा

मण्डलद्वयोपरि प्रणवेनावस्थाप्य समन्तान्नवम्योज्यमङ्गलद्र-
व्याण्यवस्थाप्य श्वेताविलोमसूत्रकङ्कणं प्रतिमाया हस्ते बध्नी-
यात् यदा बध्नातीत्यथ देवं पुरुषादीनि पञ्चविंशतितत्त्वानि
प्रवेश्य दिव्यवाससाच्छाद्य देवं संस्मृत्य पुरुषसूक्तेन स्तुत्वा
पुष्पाञ्जलिं दत्त्वा गन्धपुष्पादिभिर्मण्डपं वेदीं चाभ्यर्च्य तदुपरि
देवस्याग्रे चतुरस्रं मण्डलं कोणेषु स्वस्तिकलां स्थितङ्कृत्वा
तन्मध्ये ब्रह्मविष्णुीशानं प्रतिदिशं लोकपालांस्तदन्तरालेऽप्य-
ष्टभैरवानेकादशरुद्रान् द्वादशादित्यविश्वदेवसाध्यानासत्यमरु-
द्गणगन्धर्वाप्सरसः पितृगणपुण्यतीर्थान्यथ विघ्नेशस्कन्ददुर्गाक्षेत्र-
पालान्यथावकाशमावाह्य तन्नामभिस्तल्लिङ्गमन्त्रैर्वार्चयित्वा
प्रतिष्ठाप्य देवपार्षदेभ्यो नम इत्यर्चां कुर्य्यात् ॥ ५ ॥

अथाचार्य्यः श्रोत्रियागारादग्निमाहृत्योक्तवत् स्वकुण्डे प्रति-
ष्ठाप्यान्वाधाय देवस्याङ्गं कलासन्निधिसिद्ध्यर्थं यक्ष्य इति सङ्कल्प्य
प्रणीतास्थापनान्तं कृत्वा तत्र प्रतिष्ठाप्य देवमावाह्य तत्प्रकाश-
मन्त्रैर्व्याहृतिभिर्वा पलाशोडुम्बराश्वत्थापामार्गसमिदाज्यचरु-
तिलैरष्टसहस्रमष्टशतमष्टाविंशतिर्वा जुहुयात्तत्राज्यमाहुति-
सम्पातं प्रतिकुण्डं स्थापितशान्तिकलशेषु निक्षिपेत्ततः शिरसु-
रसि पादयोः प्रतिमां स्पृष्ट्वा स्विष्टकृदादि हुत्वा पूर्णाहुतिं
जुहुयादेवमृत्विजोऽपि स्वयकुण्डे जुहुयुरथ मण्डपस्थकलशोद-
केन समुद्रज्येष्ठा इति चतसृभिः आपोहिष्ठेति तिसृभिरभि-
षिच्य प्रतिष्ठाप्य देवमन्त्रेण संस्रावकलशोदकेन संस्नाप्याश्वयो-
यन्त्यश्वभिरिति सूक्तेन शुद्धोदककलशेनाभिषिच्य वस्त्रयुग्म-
माच्छाद्य पञ्चोपचारैः सम्पूजयेदित्यधिवासनं, त्रिरात्रमेकरात्रं
वा सद्यो वा कुर्य्यात्तद्रात्रौ र्विचित्रभूयिष्ठान्नेनाश्वत्थपत्रेण
तिल्लमन्त्रेण भूतबलिन्दत्त्वा यजमानो द्विजेभ्यश्च मिष्टान्नमधि-
रात्रसंख्यया यावद्दक्षिणां दद्यात् ॥ ६ ॥

अथ श्वोभूते गर्भगृहे स्थापितपीठे देव्या देवस्य वा अभिषेकं कृत्वा मह्वीमूषु मातरमिति देवमातृच्छादितिर्द्यौरिति स्तुत्वा तल्लिङ्गमन्त्रेण षोडशोपचारैः सम्पूज्य अत्र इन्द्राग्नी इति सूक्तेन प्रासादं प्रोक्ष्य देवं प्राग्योत्तिष्ठेत्युत्थाप्य तत्र वाभिमुखं कृत्वा रत्नादि प्रदर्श्य पुष्पाञ्जलिं दत्त्वा पुरुषसूक्तेन स्तुत्वाऽऽकृष्णेनेति प्रद्वारेण गर्भगृहं प्रविश्याभ्यर्च्य पीठिकागर्भे रत्नं प्रागादिदिक्षु इन्द्रादिनामभिर्नमोऽन्तैर्वज्रमौक्तिकवैदूर्यशङ्खस्फटिकपुष्परागेन्द्रनीलमरकतान् क्रमेण क्षिप्त्वा गोधूमयवमुद्गनीवारव्रीहिसर्षपश्यामाकतिलानारोप्यादिधातुजातं कूर्मे क्षिपेत् सुवर्णगरुडं विष्णोः प्रभोस्तु वृषभं सर्वत्र नमः शिवायेति निक्षिप्याथ सुलग्ने देवमन्त्रेण प्रतिष्ठाप्य प्रतिष्ठितपरमेश्वर इत्युक्त्वा शलाकामपसारयेदथ देवं स्पृष्ट्वा तन्मयो भूत्वा भुवाद्योरिति सूक्तं जपित्वा प्रणवेन देवेऽङ्गन्यासं कृत्वा पुरुषसूक्तेन वा कर्णे सप्रणवव्याहृतिगायत्रीं जपित्वाचार्यः पुरुषसूक्तेनोपतिष्ठेताथ यजमानः स्वागतं देवदेवेश मद्भक्त्या त्वमिहागतः। प्राकृतं त्वाञ्च संदृष्ट्वा बालवत्सत्ववत्सल॥ इति सकलत्रं शरणं प्रपद्य पुष्पाञ्जलिं दद्यात्॥ ७॥

अथाचार्यस्त्वर्घ्यादि दत्त्वा शान्तिकलशोदकेन पञ्चामृतैस्तीर्थ्यैः कुशोदकेन रत्नोदकेन स्नापयित्वा पुनस्तल्लिङ्गमन्त्रेण सम्पूज्य पादनाभिशिरःसु देवं संस्पृष्टेदेवेति त्रिर्जपित्वा परिवारदेवताः सम्पूजयेदथ कर्त्ता वस्त्रालङ्कारगोभूहिरण्यान्याचार्याय तदर्धमृत्विग्भ्यस्तदर्धं स्थापिभ्यस्तदर्धं सदस्याय यथाविभवं ब्राह्मणभोजनमाचतुर्थाहं प्रथमे देवस्य मधुना द्वितीये हरिद्रासर्षपपिष्टेन तृतीये श्रीखण्डयवपिष्टेन लेपनं स्नानं चतुर्थे तु नमः शिलाप्रियङ्गुपिष्टेनोद्वर्त्याष्टोत्तरशतकलशैस्तदर्धसंख्यैर्वा क्षीरवृक्षस्य त्वक्पल्लवेन दूर्वायवसिद्धार्थादिमङ्गलद्रव्य-

तीर्थोदकैर्गङ्गादिनदीनीरमावाह्य ब्राह्मणैः सहाभिषेकं कुर्यादथ यजमानस्याभिषेकं कुर्युः सर्वं जलक्रीडान्तं प्रतिष्ठोपकरणमाचार्य्यस्याचलप्रतिष्ठायान्तु कुण्डमण्डपवेदिकरणं तत्राचार्य्य एव पूर्ववदभिषिच्याभ्यर्च्य सर्वतोभद्रमण्डले दिव्यपीठे देवसुपवेश्य पूर्वादिदिक्षु वस्त्रचूतपल्लवोपशोभितजलपूर्णकलशानवस्थाप्य दीपान् प्रज्वाल्य गन्धेन विनेतज्ज्योतिः प्रकल्प्य चित्रबलिं दत्त्वा देवमभ्यात्मं स्मृत्वा पुरुषसूक्तेन स्तुत्वाङ्गदेवताः सम्पूज्य पूर्ववत् प्रतिद्रव्यं हुत्वा देवस्याज्याहुतिसम्पातञ्चेत्युत्तरकलशे क्षिप्त्वा पूर्णाहुतिं हुत्वाथ कर्त्ता कृताञ्जलिः सन् देवमानीय पुष्पेण प्रतिमायां प्रतिष्ठाप्य पश्चात्कृतपूर्वकसम्पादितकलशोदकेन इदम् आप इत्यभिषिच्याभ्यर्च्य देवार्चनदक्षिणादानादिकं पूर्ववदाचरेत् ॥ ८ ॥

अथ वाप्यादिविधिः । प्रागुदक्प्रवणे शुचौ देशे ब्राह्मणैः सह गत्वा पुण्याहवाचनादिवास्तुपूजनान्तं कृत्वा आचार्य्यादि-ऋत्विग्वरणकुण्डमण्डपाद्युक्तप्रकारेण कृत्वा यजमानसन्निहितं चोरहत्वं पूर्वमण्डपप्रागभावेऽवस्थाप्य वेदिमध्ये पद्मगर्भं षोडशारम्परितश्चतुरस्रमण्डलोपेतं कृत्वा आचार्य्यः पद्ममध्ये सपत्नीकः ब्रह्मविष्णीशानां विनायकस्य च सौवर्णरूपाणि तल्लिङ्गमन्त्रेण समन्तात्तेषु स्वर्णजलचराणि स्थापयित्वा वरुणमन्त्रेणार्चयित्वा तद्वद्दिक्लोकपालादीन् सम्पूज्य मण्डलप्रतिकोणं कलशचतुष्टयमप्युदकमङ्गलद्रव्यवस्त्राद्ययुक्तं स्थापयित्वेमं मे गङ्गे इति गङ्गादिनदीमावाह्याभ्यर्च्य वारुणं चरुं कृत्वा समुद्रज्येष्ठा इति चतसृभिः प्रत्यृचं गायत्र्या वाज्याहुतीर्हुत्वा तत्त्वा यामीति पञ्चभिस्त्वन्नो अग्ने वरुणस्येति द्वाभ्यामिमं मे वरुणेति चैकया चर्वाहुतीः स्विष्टकृतं हुत्वा ब्रह्मप्रीत्यर्थं वरुणमन्त्रैः समिदाज्यं हुत्वा शान्तिकर्मार्थं यज-

मानस्त्वाभिषिञ्चेयुः स तु तेभ्यो गवां सहस्रं शतं पञ्चाशतं कृत्स्ने तु सवत्साङ्गामलङ्कृतां सूर्य्यमन्त्रेण पाययित्वा तड़ागनैर्ऋतादारभ्येशानान्तं हिरण्यवतीत्युत्तरया आपो अस्मानिति स्वयं तत्पुच्छं गृहीत्वोत्तरेत् छन्दोगाय तां गां दत्त्वा तत्कलशस्थस्वर्णजलचरान्तर्जले निक्षिप्य पुष्पाञ्जलिं दत्त्वा देवपितृमनुष्यादयः प्रीयन्तामिति दद्यात् पूर्ववदाचतुर्थाहमुत्स-र्गादिवसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिरेषु तज्जलं स्थितमश्वमेधराजसूयाग्निष्टोमोक्थ्यवाजपेयातिरात्रफलमिति ॥ ८ ॥

अथारामेष्वप्येवं विशेषस्तु स्वस्तिवाचननान्दीश्राद्धवेदिकुण्डमण्डप ऋत्विगाचार्य्यवरणादिपूर्ववत् कृत्वोक्तलक्षणस्य पञ्चस्य मध्यदशबहिर्देशेषु ब्रह्मादीन् लोकपालानभ्यर्च्य वस्त्रादीन्यकूलस्थानं वस्त्रगन्धादिना सम्पूज्य तेषु स्वर्णरूप्यफलानि बध्वा फलिते नेत्रे स्वर्णशलाकाञ्जनेनाक्त्वा सुवर्णसूच्या कर्णवेधं कृत्वाग्निं प्रतिष्ठाप्य सोमोधेनुमिति ऋचा सौम्यस्त्वाहुतिं हुत्वा स्विष्टकृदादि कृत्वाथ तथैव समिदाज्यतिलानष्टशतन्तदर्धसंख्यया वा हुत्वा कर्मशेषं समाप्य शान्तिकलशैर्यजमानस्त्वाभिषिञ्चेयुः स च वस्त्रहिरण्यादिदक्षिणां दद्यादप्यलाभे तु दक्षिणाङ्गामलङ्कृतामाराममध्यादुदङ्मुखीम् उत्सृज्याचार्य्याय दद्याच्छेषं चतुर्थाहं फलन्तु सर्वकामावाप्तिरिति पूर्त्तानि ॥ १० ॥

देवाश्च हवाऽसुराश्चेषु लोकेषु स्पर्धन्ते देवाः प्रजापतिमुपधावंस्तेभ्य एतां देवीं शान्तिं प्रायच्छन्त ततः स शान्तिकासुरानभ्यञ्जयंस्ततो वै देवा अभवन् परासुराभवत्यात्मनापरास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेदाश्वः पूर्वाह्ण एवं प्रातराहुतीर्हुत्वा दर्भान् शमीन् वीरणानि दधिसर्पिःसर्षपाम् फलावतीमपामार्गशाखां क्षौमित्यं तान्याहरेदाहारयेद्वा ।

स्नातः शुचिः शुचिवासाः स्थण्डिलमुपलिप्य नित्यतन्त्रेण मोदनकसरयवागूरक्तपायसन्दध्नि क्षीरघृतमिति घृतोत्तरां पृथक् च सर्वेषां वा पायसं शमीमयीनां समिधां प्रादेशमात्राणां दधिमधुघृताक्तानां शन्नोदेवीरभिष्टय इत्यष्टशतं जुहुयान्महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ ११ ॥

स प्राचीं दिशमन्वावर्त्ततेऽथ यदास्य मणिकुम्भस्थालीतरणमायासो राजकुलविवादो वा यानच्छत्रशय्यासनावसथध्वजगृहैकदेशप्रभञ्जनेषु गजवाजिमुख्यो वा प्रमीयेताश्वतरी दिवागर्भो जायते हस्तिनी वा मज्जत इत्येवमादीनि तान्येतानि सर्वाणीन्द्रदैवत्यान्यद्भुतानि तानि प्रायश्चित्तानि भवन्ति इन्द्रं वो विश्वतस्परीति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति इन्द्राय स्वाहा शचीपतये स्वाहा वज्रपाणये स्वाहेश्वराय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १२ ॥

स दक्षिणां दिशमन्वावर्त्ततेऽथ यदास्य शरीरे वारिष्टानि प्रादुर्भवन्ति व्याधयो वानेकविधा अतिदुःस्वप्नातिभोजनमतिनिद्रामालस्यं प्रेतं पततीत्येवमादीनि तान्येतानि सर्वाणि यमदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति नाके सुपर्णमुपयन्त्यनन्तमिति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति यमाय स्वाहा प्रेताधिपतये स्वाहा दण्डपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १३ ॥

स प्रतीचीं दिशमन्वावर्त्ततेऽथ यदास्य क्षेत्रखण्डसंस्थेषु धान्येषु ईतयः प्रादुर्भवन्त्याखुपतङ्गपिपीलिकाश्वगर्भो मृगशलभगजज्वलनानि पावमानानीत्येवमादीनि तान्येतानि सर्वाणि वरुणदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति प्रवरुणं

वोरिश्यादसमिति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति वरुणाय स्वाहा अपां पतये स्वाहा पाशपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १४ ॥

स उदीचीं दिशमन्वावर्त्ततेऽथ यदास्य कनकरजतवस्त्रवैडूर्यमणिमौक्तिकवियोगो भवत्यारब्धा वा विपद्यन्ते मधूनि वा निलीयन्ते काकमैथुनानि पश्येतान्यरिष्टानि वा वयांसि च गृहमध्ये वल्मीकं छत्राकं वोपजायते वायसकपोता वा वन्यविहङ्गश्वमृगप्रवेशो गोसर्गो वा गृहमारोहेच्छुष्कात्तरुः प्ररोहेद् गृहमध्ये दूर्वाः प्ररोहन्ते तैलं स्रावयेदेव श्वेतवायसो मण्डूकोऽग्निं प्रविशति सरटो मूर्ध्नि निपतति चुल्लीर्निपतति प्रज्वलन्दीपः पतति सर्पो वा द्वारे निष्क्रामतीत्येवमादीनि तान्येतानि सर्वाणि वैश्रवणदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति अभित्वं देवं सवितारमोण्योरिति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति वैश्रवणाय स्वाहा धनाधिपतये स्वाहा हिरण्यपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १५ ॥

स पृथिवीमन्वावर्त्ततेऽथ यदास्य पृथिवीतटानि स्फुटन्ति कम्पन्ति कूजन्त्यकस्मात् सलिलमुत्तोलयति अकाले फलपुष्पमभिवर्त्तेत इत्येवमादीनि तान्येतानि सर्वाण्यग्निदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्त्यग्निं दूतं वृणीमह इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति अग्नये स्वाहा हविष्पतये स्वाहा अर्चिःपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १६ ॥

सोऽन्तरिक्षमन्वावर्त्ततेऽथ यदास्य वाताविवाता वायन्ते

अभ्रेषु वा रूपाणि दृश्यन्ते खरकरभगजकङ्कटश्येनवा-यसवायसगोमायुपांसून्युपरिपांसूमांसमेध्यान्यस्थिका[illegible]वर्षाणि प्रपद्यन्त इत्येवमादीनि तान्येतानि सर्वाणि वायुदैवत्यान्यद्भु-तानि प्रायश्चित्तानि भवन्ति वात आवातु भेषजमिति स्थाली-पाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति वायवे स्वाहा सहाद्भुताधिपतये स्वाहा शीघ्रपाणये स्वाहा ईश्व-राय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १७ ॥

स दिवमन्वावर्त्ततेऽथ यदास्यातिवृष्टिरतिदुःखं वा पर्वता वा स्फुटन्त्याकाशभूमिं कम्पते महाद्रुमा उन्मूलयन्ति चतुष्पादं पञ्चपादं भवतीत्येवमादीनि तान्येतानि सर्वाणि सूर्य्यदैव-त्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति बण्महाँ असि सूर्य्येति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति सूर्य्याय स्वाहा रुद्राधिपतये स्वाहा रविकिरणाय स्वाहा ईश्वराय स्वाहा सर्वोत्पातप्रशमनाय स्वाहेति महाव्याहृति-भिश्च हुत्वा शन्तातीयं जपेत् ॥ १८ ॥

स रात्रिमन्वावर्त्ततेऽथ यदास्य तारावर्षाणि चोल्काः पतन्ति निपतन्ति धूमोऽयन्दिशो दहति केतवश्चोत्तिष्ठन्ति गवां शृङ्गेषु धूमो जायते गवां स्तनेषु रुधिरं स्रवति रात्राविन्द्रधनुर्दृश्यतेऽथ हिमा-न्युपपतन्ति इत्येवमादीनि तान्येतानि सर्वाणि सोमदैवत्या-न्यद्भुतानि प्रायश्चित्तानि भवन्ति आप्यायस्व समेतु त इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति सोमाय स्वाहा नक्षत्राधिपतये स्वाहा शीतपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृति-भिश्च हुत्वा शन्तातीयं जपेत् ॥ १९ ॥

स परमन्वावर्त्ततेऽथ यदास्य महिष्यागाविकमानुषाश्चो-

श्चविल्लुराटि च प्रस्तुयन्ते चौना... ...न्यचकाङ्गानि विकृतानि रूपाणि ... ...वमादीनि तान्येतानि सर्वाणि रुद्रदे- ... प्रायश्चित्तानि भवन्ति इमा रुद्राय स्थिरध- ... इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुति- भिर्जुहोति रुद्राय स्वाहा उमापतये स्वाहा त्रिशूलपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महा- व्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ २० ॥

स सर्वा दिशोऽन्वावर्त्ततेऽथ यदास्यायुक्तानि यानानि प्रव- र्त्तन्ते देवतायतनानि कम्पन्ति देवताप्रतिमा हसन्ति गायन्ति नृत्यन्ति स्विद्यन्ति भिद्यन्ति रुदन्त्युन्मीलयन्ति निमीलयन्ति प्रतियान्ति नद्यस्कन्धमादित्यो दृश्यते विदले च परिवेषो दृश्यते केतुकुन्तमुपानच्छत्रं वज्रदन्तमुसलानि प्रज्व- लन्तीत्यश्वानां वारिभिरवराङ्गाः चरन्ति इतानि कर्माणि करि- क्रन्त दृष्ट्वेवमादीनि तान्येतानि सर्वाणि विष्णुदेवत्यान्यद्भु- तानि प्रायश्चित्तानि भवन्ति इदं विष्णुर्विचक्रम इति स्थाली- पाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति विष्णवे स्वाहा महाभूताधिपतये स्वाहा चक्रपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ २१ ॥

अग्निकार्य्यमासमरात्रं कुर्य्युर्यदेतन्न क्रियते पुत्रो म्रियते पौत्रो म्रियते धनमात्मानञ्च निवेश्यन्ति सुवर्णगोर्वासो हिरण्यं दक्षिणां दत्त्वा ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीत नमः आचार्य्येभ्यो नमः आचार्य्येभ्यो नमः शौनकाय नमः शौन- काय ॥ २२ ॥

इत्याश्वलायनगृह्यपरिशिष्टे चतुर्थोऽध्यायः ।

आश्वलायनगृह्यपरिशिष्टं समाप्तम् ।